कारिकामृतम् _ with the commentary
चषक of पं० रमानाथ बालकृष्ण
करकरे - Edited and and published
by Pt. शिवशंकर काशीराम पण्ड्या
at काठियावाड Printing Press. loose
leaves edn., राजदुर्गपत्तन, 1799 Saka era.

1173

12

12



Bill No. 5/07-08
74
2008-05-33

अथकारिकामृतव्याख्यानंचषका
भिधं प्रारभ्यते.

# शुद्धिपत्रम्.

| पत्रं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १९ | द्याः | द्या |
| ४ | २ | धनेन | धित |
| ६ | १० | कात्य | कात्या |
| ८ | १७ | द्यार्धं | द्यार्धां |
| १० | १ | रति | रीत |
| १२ | ८ | प्येतं | प्येत |
| १३ | २१ | त्रित्वे | त्रित्व |
| १४ | १४ | त्रिभे | विभे |
| १९ | १२ | कारी | कारि |
| २० | १ | किर्त्ति | कीर्त्ति |
| २० | १५ | जग्रहे | जग्रह |
| २५ | २१ | विरोधात् | विरोधः |
| ३० | ५ | क्षिव | क्षित |
| ३० | १० | मेवा | मेव |
| ३० | १२ | चेरित्य | चेत्य |
| ३० | १५ | अत्रद्यापि | अत्रयद्यापि |
| ३० | १६ | श्वरम् ॥ जग्मु | श्वरंजग्मु |
| ३० | २२ | तिचच | तिचव |
| ३१ | १५ | तीति | ति |
| ३१ | २४ | मुरप | मुप |
| ३२ | २३ | नातंत्र | नीतंत्र |
| ३३ | १३ | मध्यप्य | मध्य्य |
| ३४ | ३ | शक्ति | शक्तिः |
| ३५ | १३ | शिभट्ट | शिवभट्ट |

॥ श्रीगणेशायनमः ॥ श्रीगुरुभ्योनमः ॥ नत्वाश्रीगुरुपादपद्ममलंस्वीयेसहस्रेदलेस्मृत्वा नाहतपद्ममध्यविलसच्छ्रीराजराजेश्वरीम् ॥ श्रीमातुःपदपंकजंचपितरंश्रीबालकृष्णाभिधं श्रुत्याद्यागमपारगंसुधिषणंतंसर्वदासंस्तुमः ॥ १ ॥ नागोजिभट्टैरुद्धृतंतंत्राब्धेःकारिकामृतम् ॥ व्याख्यानंतन्यतेतस्यश्रीगुरोःसंप्रदायतः ॥ २ ॥ यद्यपितत्सुलभतरंतदाशयंकेचिदन्यथा ज्ञात्वा ॥ कुर्वंत्यमृतेविषमतिमेवंकर्त्तरिमुधारोपः ॥ ३ ॥ कर्त्तरितुदोषभारंज्ञात्वावैगुर्वनुग्रह तः ॥ तद्दोषोद्धरणार्थंतस्मादेतच्छ्रमश्चनोऽव्यर्थः ॥ ४ ॥ तत्रतावदिदंसप्तशतीस्तोत्रंसर्वकामदु घंनकेनचिन्निर्मितांकिंतुवेदवदनाद्येव ॥ तदुक्तंकात्यायनीतंत्रप्रकाशिकायांमेरुतंत्रे ॥ यथा वेदोह्यनादिर्हितद्वत्सप्तशतीस्मृतेति ॥ अतएवास्यमार्कंडेयपुराणांतर्गतत्वेपिपुराणसंख्याब हिर्भूतत्वात्खिलेतिनामाशिष्टावदंति ॥ भारतेहरिवंशवत् ॥ अस्यस्तोत्रस्यव्यासकृतमिति लोकेव्यवहारस्तुव्यासेनप्रकटीकृतत्वाद्बोध्यः ॥ तदुक्तंमेरुतंत्रे ॥ सप्तशत्यास्तुसकलंतत्त्वंवे

---

१ आगवादिमलरहितमित्यर्थः ॥

२ आदिनास्मृत्यादीनांसंग्रहः ॥

३ ननुसकलमित्यस्यत्रयोदशाध्यायमात्रप्रतिपाद्यं ॥ पादोनमित्यस्यकिंचिदधिकनवाध्यायप्रतिपाद्यं ॥ अर्धमित्यस्य

ध्यहमेवहि ॥ पादोनंश्रीहरिर्वेत्तिवेत्त्यर्धंतुप्रजापतिः ॥ व्यासस्तुर्यांशकंवेत्तिकोट्यंशमितरे जनाइति ॥ व्यासकृतत्वेतुकृतेरिच्छापूर्वकत्वादिच्छायाश्चज्ञानपूर्वकत्वात्तमःप्रकाशवद्विरोधस्यजागरूकत्वात् ॥ न[४]ह्यज्ञातपदार्थस्यबुध्यै[५]नारूढस्यनामोच्चारणमपिबुद्धिमताक्रियमाणं लोकेक्वचिदप्युपलभ्यते ॥ तस्माद्व्यासेनप्रकटीकृतमित्येवार्थःकर्त्तव्यइतिसुधियोविभावयंतु ॥ रुद्रयामलेपि ॥ अस्तिगु[६]ह्यतमंदेव्यामाहात्म्यंसर्वसिद्धिदम् ॥ वाक्यै[७]रर्थैश्चपद्यैश्चसप्तश

---

किंचिदधिकषडध्यायप्रतिपाद्यं ॥ तुर्यांशकमित्यस्यकिंचिदधिकतृतीयाध्यायप्रतिपाद्यमित्यर्थःप्रतीयते ॥ नचेष्टापत्तिः ॥ तथासतिव्यासस्यतावन्मात्रकर्तृत्वंकेनवार्यतइतिचेन्न ॥ सप्तशतीत्वसमानाधिकरणायावंतोधर्मास्तत्प्रत्येकावच्छिन्नंसकलमित्यस्यार्थः ॥ एतद्विषयकज्ञानंशिवस्यैव ॥ सप्तशतीत्वसमानाधिकरणकतिपयधर्मावच्छिन्नविषयकज्ञानं हरेरितिक्रमेणोनोनधर्मावच्छिन्नविषयकज्ञानंप्रजापतिव्यासयोरितिनव्यासस्यसप्तशत्येकवर्णकर्तृत्वमपीति ॥

४ नहीति ॥ अज्ञातपदार्थस्यशाब्दबोधाविषयस्येत्यर्थः ॥

५ कुतइत्याह ॥ बुध्येति ॥ बुद्धिपदस्यशक्तिज्ञानमर्थः ॥ तथाचशक्तिज्ञानाविषयस्यशाब्दाविषयत्वंस्पष्टमेव ॥

६ युक्त्यासप्तशत्यारनादित्वंप्रसाध्यप्रमाणांतरमपिदर्शयति ॥ रुद्रयामलेपीति ॥ अस्तिगुह्यतममिति ॥

७ गुह्यतमत्वेहेतुमाह ॥ वाक्यैरिति ॥ यथासषडंगोवेदोज्ञेयोध्येतव्यश्चेतिश्रुत्यावाङ्मात्राध्ययनेनतदर्थज्ञानेनचै

त्यात्मकंशुभम् ॥ सविशेषपरंसाक्षाच्चिच्छक्तिमहिमाश्रयम् ॥ तात्पर्यगत्यातत्कृत्स्नंनिर्विशेषचिदाश्रयमिति ॥ अस्यस्तोत्रस्यचिदाश्रयपरतयाव्याख्यानंगौडपादीयभाष्येस्पष्टम् ॥ तदप्येतन्मूलकमेवेतितत्रैवस्पष्टम् ॥ अस्यसप्तसप्तत्युत्तरचतुःशताधिकैकोनविंशतिसहस्रार्णमालामंत्रात्मकस्यस्तोत्रस्यपाठेत्रैवर्णिकानामेवाधिकारः ॥ तथाचकालिकापुराणे ॥ मोहाद्वाकामतःशूद्रःपुराणंसंहितांस्मृतिम् ॥ पठन्नरकमाप्नोतिपितृभिःसहपापकृदितिस्त्रीशूद्राणांपुराणस्तवपाठनिषेधात् ॥ एतेनविष्णुसहस्रनामसप्तशत्यादिस्तवपाठेनाधिकारइतिकैमुत्येनासिद्धम् ॥ स्पष्टीकृतंचैतदाचार्यभगवत्पादैःशूद्रःसुखमवाप्नुयादितिविष्णुसहस्रनामव्याख्यानावसरेशूद्रःश्रवणेनैवनतुपाठादित्यादिना ॥ शूद्रकमलाकरेजगद्गुरुणाकमलाकरभट्टेनापिशूद्राणांसर्वथापौराणमंत्रपाठेपिनाधिकारःकिमुतवेदमंत्रपाठेतत्तुल्यभारतसप्तशत्यादिमंत्रपाठेचनाधिकारइतिविस्तरेणोपपादितमितितत्रैवद्रष्टव्यमितिदिक् ॥ एतेनाधुनिकायेशूद्रागी



---

हिकामुष्मिकत्वंवेदस्यप्रतिपादितंतथास्यस्तोत्रस्यापिवाक्यैरर्थैश्चपदैश्चेत्यनेनैहिकामुष्मिकत्वंप्रतिपादितम् ॥ तथाचानादित्वंस्पष्टमेवेत्यन्यत्रविस्तरः ॥

ताविष्णुसहस्रनामसप्तशत्यादिस्तवपाठंकुर्वंतितेदेवानांप्रियाइतिबोध्यम् ॥ अस्यस्तोत्रस्यपाठप्रकारस्त्वस्मत्कृतदुर्गापाठक्रमेद्रष्टव्यः विस्तरस्त्वस्मद्गुरुचरणैर्दुर्गाप्रदीपेउक्तस्ततएवावधार्यः ॥ प्रकृतमनुसरामः ॥ अथेदंसप्तशतीस्तोत्रंश्लोकसंख्याभेदेनात्रिविधमपिव्यवस्थयैवत्रिभिस्तंत्रैरवलंबितमपिनभिद्यते ॥ शाखांतराधिकरणन्यायेनकर्मणइवसर्ववेदांतप्रत्ययन्यायेन श्रीविद्यायाइवस्तोत्रस्याप्यैक्यात् ॥ ईषद्वैलक्षण्यस्याप्रयोजकत्वात् ॥ मनुचंद्रादिश्रीविद्याया भेदानांतंत्रभेदेनविलक्षणतयोधृतानामप्यैक्यस्यमंत्रविदांसंमततायाःसेतुबंधेउपासकधुरीणैर्भास्कररायैर्वर्णनाच्च ॥ इयांस्तुविशेषः ॥ यामलतंत्रावलंबेतुसप्तशतसंख्यापूर्त्यर्थंद्वात्रिंशद्वारंनवार्णःशरणीक्रियते ॥ ज्ञानार्णवोक्तपाठावलंबेतुश्वेताननाश्वेतभुजेत्यादिनामषोडशकंद्विःशरणीक्रियतइतितयोःसकारादिर्नुकारांतोमनुःपरमदुर्लभइतिगौण्यासृष्टिन्यायेनव्यपदेशोदुर्वारः ॥ कात्यायनीतंत्रोक्तपाठावलंबेतुमुख्यएवव्यपदेशः ॥ बहुभिःशिष्टैरयमेवपक्षआदृतः ॥ अस्मिन्पक्षेतुसकारादिरितितुमार्कंडेयपदादिमकारोपलक्षणंबोध्यम् ॥ वस्तुतस्तुमकारादिर्नुकारांतःसप्तशत्यभिधोमनुरित्येवतंत्रपाठोमुख्यइतिबहवस्तदातूपलक्षणस्वीकारक्लेशोनेतिलाघवम् ॥ तदेतत्तंत्रभेदेनत्रिविधपाठमध्येकात्यायनीतंत्रमतमेवसर्वदेशेप्रचलितमितितमा

त्मकोमंत्रः ॥ ६ ॥ श्री श्री श्री छी श्री छी मंत्राइति ॥ एवमेतावत्पर्यंतंचत्वारिंशन्मंत्रसंख्याजातेत्यर्थः ॥ चत्वारइति ॥ दुःखायेत्यारभ्यज्ञानिनोरपीत्यंताश्चत्वारःश्लोकात्मकामंत्राइत्यर्थः ॥ पुनरर्धमिति ॥ पुनर्ममास्येत्यर्धश्लोकात्मकएकोमंत्रः ॥ अत्रापिपरममूलेराजोवाचेतिषण्मंत्राभादितांताइत्यनेनादिमाधांतिमाधयोराद्यांत्याक्षरप्रतीकग्रहणेनोक्तार्थएवतात्पर्यंपूर्वोक्तंनविस्मर्त्तव्यम् ॥किंच॥आद्यर्धकरणेभ

**मंत्राश्चत्वारिंशदेवंचत्वारःश्लोकमंत्रकाः ॥**
**पुनरर्धमृषिश्चार्धःश्लोकमंत्राःपुनर्दश॥ ७ ॥**

गवान्निदमर्धस्यादितिवचनस्यापिसत्वात् ॥ अंत्यार्धस्यतूवाचांतास्तुयेमंत्राइतिपरिभाषया मंत्रत्वसिद्धेः ॥ यत्त्वत्रपंचश्लोकमध्येआद्यौद्वावर्धात्मकौमंत्रावंत्याश्चत्वारःश्लोकात्मकाइति केचिदाहुस्तन्न ॥ पूर्वोक्तवचनविरोधात् ॥ ऋषिरिति ॥ ऋषिरुवाचेत्येकोमंत्रः ॥ चार्धइति ॥ चपुनर्ज्ञानमस्तीत्यर्धश्लोकात्मकोमंत्रः॥ श्लोकमंत्राइति ॥ विषयश्चेत्यारभ्यसनातनीत्यंतादशश्लोकमंत्राः ॥ ७ ॥

माहात्म्यमुवाचतस्यैहविरिदंदत्तंतस्यैनमइतितदुचितसंबंधबोधकपादाध्याहारेणनिर्वाहः ॥ अनयैवदिशासर्वत्रानिर्वाहः सुधियामुचितइत्यलंविस्तरेण ॥ ५ ॥ छ श्री मार्कंडेयइति ॥ मार्कंडेयउवाचेत्येकोमंत्र ः ॥ ततस्तदनंतरंततस्ताविव्यर्धश्लोकात्मकएको मंत्रः ॥ तदुक्तंभुवनेशीसंहितायाम् ॥ ततस्तावर्धमेतत्स्यादिति ॥ ततःसमाधिर्नामवैश्योसौ सचेतिश्लोकात्मकएकोमंत्रः ॥ अर्धश्लोकेति ॥ पुनःउपविष्टेत्यर्धश्लोकात्मकएकोमंत्रः ॥

मार्कंडेयस्ततश्चार्धश्लोकःश्लोकात्मकःपुनः ॥
अर्धश्लोकात्मकोमंत्रोराजार्धश्लोकमंत्रकः ॥ ६ ॥

एतेनगुप्तवत्यांततस्ताविविश्लोकद्वयेआद्यौद्वावर्धश्लोकात्मकावंत्यस्तुक्तत्वातुताविव्येकश्लो कात्मकइत्युक्तंतन्नादर्त्तव्यम् ॥ एवंविभागकरणेप्रमाणाभावात् ॥ अस्मन्मत्तेतुततस्तावर्धमे तत्स्यादित्याद्यर्धकरणेप्रमाणसत्वात् ॥ कात्ययनीतंत्रेपि ॥ तादिवर्णंचभुवनस्वरयुग्वारुणांति ममित्याद्यांत्यप्रतीकग्रहणेनोक्तविभागस्यध्वननाच्च ॥ राजेति ॥ राजोवाचेत्येकोमंत्रः ॥ अ र्धश्लोकमंत्रकइति ॥ अत्रकप्रत्ययोऽल्पेइतिसूत्रात् ॥ तथाचभगवंस्त्वामहमित्यर्धश्लोका

षुचैकैकमंत्रत्वनिर्णयइवात्रापियैःसंत्यज्येत्यस्योत्तरार्धस्थतच्छब्देनसाकांक्षत्वात्तन्नैवान्वयेपर
स्पराकांक्षानपायादुभयघटितमेकंवाक्यमेवमंत्रत्वानियामकमितिवाच्यम् ॥ उक्तलक्षणस्य
क्वचित्सत्वेनसर्वत्रासत्वात् ॥ ब्राह्मणादिवाक्येषुमंत्रत्वाभावात् ॥ हुंफडादिपदमंत्रेषुवाक्य
त्वाभावाच्च ॥ सिद्धांतेतुमंत्रात्वप्रसिद्धिविषयस्यैवमंत्रलक्षणत्वस्यतच्चोदकेषुमंत्राख्येतिसूत्रेजै
मिनिनाकथनात् ॥ अस्तिचसप्तशतीमंत्रेसर्वत्रभगवतःशिवस्यमंत्रत्वमितिव्यवहारः ॥ तथा
चबलवत्प्रमाणमंतराप्रमाणाभासप्रमाणेनमंत्रविभागकरणेमहाविश्वासेनाद्ययावदनुतिष्ठता
मास्तिकानामहहधर्मविप्लवश्चकियान्वर्णनीयइतिसुधियोविभावयंतु ॥ नचमंत्रार्थंमंत्रचैतन्यं
योनिमुद्रांनवेत्तियः ॥ शतकोटिजपेनापिमंत्रसिद्धिर्नजायतइत्यादिवचनस्यमंत्रैरेवमंत्रार्थः
स्मर्तव्यइतिसकलशास्त्रसिद्धांतस्यचबहुषुश्लोकेषुनिराकांक्षशाब्दबोधाभावोविरोधइतिवाच्य
म् ॥ तत्रतत्रानन्यगतिकत्वेनतत्तदुचितपदांतराध्याहारानुषंगादिनावाक्यपूर्त्तिराश्रयणीया ॥
इषेत्वोर्जेत्वेत्यादौछिनद्मीत्यस्याध्याहारेणावांतरवाक्यत्वस्वीकारदर्शनात् ॥ अतएवद्वादशे
ध्यायेपशुपुष्पार्घधूपैश्चेतिश्लोकद्वयस्यारण्येप्रांतरेवापीतिश्लोकचतुष्टयस्यैकान्वयित्वेप्युक्तरी
त्याप्रतिश्लोकंभिन्नमंत्रतासर्वैःस्वीक्रियमाणत्वात् ॥ यथामार्कंडेयउवाचेत्यादौमार्कंडेयःयस्या

अर्धेति ॥ अर्धश्लोकात्मकौमंत्राविवितिद्विवचनेनयैर्निरस्तइतिश्लोकेखंडद्वयंकृत्वामंत्रद्वयंसंपा दनीयमित्यर्थः ॥ तदुक्तंकात्यायनीतंत्रे ॥ नृपस्योक्तिर्मातवर्णऐकारेणयुगादितः ॥ सकारो बिंदुसंयुक्तोंतेमंत्रावीदृशौमताविति ॥ वैश्योक्तिरिति ॥ तदनंतरंवैश्यउवाचेत्येकोमंत्रः ॥ पुनरर्धमिति ॥ पूर्वोक्तन्यायेनैवमेवतदित्यारभ्यनिष्ठुरमित्यंताश्चत्वारएवश्लोकास्तेष्वादिमार्धा तिमार्धकरणेनपंचमंत्रत्वंबोध्यम् ॥ कात्यायनीतंत्रेचेयमेवरीतिरादिमार्धांतिमार्धप्रतीकग्रहणेन

अर्धश्लोकात्मकौमंत्रौवैश्योक्तिस्तदनंतरम् ॥
पुनरर्धंपुनःश्लोकत्रयमर्धंपुनर्भवेत् ॥ ५ ॥

स्पष्टमेवबोधिता ॥ तदुक्तंकात्यायनीतंत्रे ॥ स्वरैकादशआदितः ॥ वन्हिबीजंबिंदुयुक्तमंतेस्या त्मनुपंचकमिति ॥ एतेनैवमेतादित्यादिचतुर्षुश्लोकेष्वाद्यास्त्रयःश्लोकरूपाअंत्यौद्वावर्धश्लोका त्मकौ ॥ यैः संत्यज्येत्यस्यपूर्वेणसहान्वयायोगात् ॥ उत्तरार्धस्थतच्छब्दस्यहार्दंचेतिकर्मणश्चा नेनैवान्वेतुंयोग्यत्वादित्यपास्तम् ॥ मंत्रत्वप्रयोजकप्रमाणस्यैवाभावात् ॥ नचार्थैकत्वादेकं वाक्यंसाकांक्षंचेद्विभागेस्यादितिजैमिन्युक्तलक्षणानुसारेणयजुःषुनिरवसानेष्वनियतावसाने

र्थः ॥ वैठ्योक्तिरिति ॥ वैठ्य उवाचेत्येकोमंत्रः ॥ तेनसहविंशतिर्मंत्राःसंपन्नाइत्यर्थः ॥२॥ ३
पुनरर्धमिति ॥ पुनःसमाधिर्नामेत्यर्धश्लोकात्मकएकोमंत्रः ॥ पुनःपुत्रदारैरित्यारभ्यमक्षेमं
किन्नुसांप्रतमित्यंतंश्लोकत्रयंश्लोकात्मकंमंत्रत्रयमित्यर्थः॥ अर्धपुनरिति॥पुनरर्धश्लोकात्मकए
कोमंत्रइत्यर्थः ॥ अत्रकेचित् ॥ समाध्यायाःसंस्थितांतास्त्रयःश्लोकरूपामंत्रास्ततःकिन्नुतेषा

पुनरर्धंपुनःश्लोकत्रयमर्धंपुनर्भवेत् ॥
पंचविंशतिरेवंस्यूराजाषड्विंशतिस्ततः ॥ ४ ॥



मितिश्लोकस्यपूर्वोत्तरार्धरूपौद्वौमंत्रावित्याहुस्तदसत् ॥ समाधिर्नाममंत्रोयमर्धोमंत्रस्तत
स्त्रयः ॥ अंतिमार्धेनसहिताःपंचमंत्राउदीरिताइतिभुवनेशीसंहिताविरोधात् ॥ एवंचपू
र्वोक्तमंत्रैःसहपंचविंशतिर्मंत्राःसंपन्नाइत्याह ॥ पंचविंशतिरिति ॥ स्यूराजेत्यत्रढ्लोपेपूर्व
स्येतिदीर्घः ॥ राजेति ॥ ततस्तदनंतरंराजोवाचेत्येकोमंत्रः ॥ तेनसहषड्विंशतिसंख्याका
मंत्राजाताइत्यर्थः ॥ ४ ॥ श्री छ श्री छ श्री

तयत्तदातत्रममत्वाकृष्टचेतनइत्यस्यार्धमंत्रत्वमस्यैवमंत्रत्वपर्याप्त्यधिकरणतांगीकारेपूर्वापर श्लोकानांपूर्णताभवति ॥ ईदृशसंकटस्थलेजैमिनिप्रभृतिभिः परिशोधनेनन्यायानामेवनिर्णा यकत्वात्इति ॥ तत्रवक्तव्यं ॥ विभागबोधकवचनाभावेहिभाद्यादितंत्रोक्तन्यायानांनिर्णाय कत्वंमस्तीतिसर्वशास्त्रसिद्धांतभूतंसम्यगुक्तम् ॥ अत्रतुपूर्वोक्तवचनसत्वेकिंहिवचनंनकुर्यादि तिन्यायस्यजागरूकत्वेनाणुरपिविशेषोध्यवसायकरइतिन्यायेनवचनविरुद्धन्यायानांनिर्णा

श्लोकमंत्राःसप्तदशाप्यर्धश्लोकात्मकस्ततः ॥
ऊनविंशतिरेवंस्युर्वैश्योक्तिर्विंशतिस्तथा ॥ ३ ॥

यकत्वाभावात् ॥ किंच ॥ त्रयोदशेध्यायेस्वल्पैरहोभिर्नृपतेइत्यादिश्लोकत्रयेपरस्परापेक्षिता नांषडर्धानांषण्मंत्रत्वस्वीकारेणमंत्रत्वपर्याप्त्यधिकरणत्वैकवाक्यत्वयोःसामानाधिकरण्यस्य क्वचित्सत्वेपिसर्वत्रासत्वेनभगवतातादृशनियमस्यास्वीकाराच्च ॥ स्पष्टश्चायमर्थोऽस्मद्गुरुच रणकृतदुर्गाप्रदीपेकात्यायनीतंत्रप्रकाशिकायाम् ॥ ध्वनितंचेदंश्रीमद्गौडपादाचार्यचरणैःस प्तशतभाष्ये ॥ ऊनाविंशतिरिति ॥ एवंचप्रथममंत्रेणसहिताएकोनविंशतिर्मंत्राःसंपन्नाइत्य

॥ तेनसप्तदशश्लोकेपुनात्रार्धमंत्रोस्तीतिसूचितम् ॥ ततस्तदुत्तरंप्रत्युवाचेत्यर्धश्लोकात्मकएको मंत्रः ॥ नन्वत्रप्रथमोपस्थितन्यायसूचीकटाहन्यायाभ्यांसर्वादौविद्यमानस्यसावर्णिःसूर्यतन यइत्यर्धस्यमंत्रत्वमस्त्विवतिचेन्न ॥ सार्धसप्तदशश्लोकमध्येऽष्टादशमंत्रकरणेपूर्णानांनिवेशोत्त रमेवार्धस्यनिवेशइतिन्यायेनांत्यार्धस्यैवमंत्रत्वौचित्यात् ॥ किंच ॥ उवाचांतास्तुयेमंत्रास्तेर्ध मंत्रात्मकाःप्रियइतिहरगौरीतंत्रवचनेनाप्यंत्यार्धस्यैवमंत्रत्वासिद्धेः ॥ नचोवाचांताइत्यत्रषष्ठी

॥ विभज्यजुहुयान्मंत्रमितिकात्यायनीमतम् ॥
मार्कंडेयउवाचैकःसावर्ण्याद्याःस्ततःपरम् ॥ २ ॥



तत्पुरुषस्वीकारेसावर्णिरित्याद्यर्धस्यापिमंत्रत्वसिद्धिरितिवाच्यम् ॥ तादृशवक्तुस्तात्पर्याभा वात् ॥ अतएवकात्यायनीतंत्रप्रकाशिकायांबहुव्रीहिसमासंस्वीकृत्यैवेदंवचनंसर्वत्रोपात्तम्॥ किंच ॥ प्रत्युवाचसतंवैश्यइत्यर्धश्लोकमंत्रकइतिगौडपादधृतवचनविरोधात् ॥ उभयविध समासस्वीकारेगौरवाच्च ॥ स्यादेतत् ॥ भादंतंत्रादिन्यायरसिकागुप्तवतीकारास्त्वेवमाहुः ॥ सार्धसप्तदशश्लोकमध्येमध्येर्धश्लोकमंत्रास्तुचतुर्विंशतिरीरिताइतिमध्यपदस्वारस्यात्सोर्चि

लंब्यैवादौस्तोत्रस्यश्लोकसंख्याआह ॥ अष्टसप्ततिरिति ॥ अस्मिन्स्तोत्रेऽष्टसप्तत्यधिकपं चशतश्लोकाइत्यर्थः ॥ सप्तशतसंख्ययेत्युत्तरान्वयि ॥ अत्रयद्यपिद्वात्रिंशतास्वरैर्युक्तएकोग्रं थोनिगद्यते ॥ सएवगदितःश्लोकस्तारानेत्रसमुद्भवइतिशक्तिसंगमतंत्रवचनेनग्रंथोद्वात्रिंशद क्षरीतित्रिकांडशेषवचनेनचद्वात्रिंशदक्षरात्मकानुष्टुप्छंदस्कस्यैवश्लोकत्वंप्रतीयतेतथापिपद्येय

**श्रीशंवंदे ॥ अष्टसप्तत्युत्तराणांश्लोकानांशतपंचकम् ॥**
**प्रोक्तंसप्तशतीस्तोत्रेतत्सप्तशतसंख्यया ॥ १ ॥**

शसिचश्लोकइत्यग्निपुराणवचनेनपद्यमात्रेपिश्लोकशब्दस्यप्रवृत्तेः ॥ तेनशक्रादयःसुरगणा निहतेत्यादिश्लोकानांश्लोकत्वसिध्याष्टसप्तत्यधिकपंचशतसंख्यासिद्धिः ॥ १ ॥ श्री तदेतत्कथंसप्तशतसंख्यास्यादतआह ॥ विभज्येति ॥ वक्ष्यमाणप्रकारेणसप्तशतसंख्ययामंत्रं विभज्यविभागंकृत्वाजुहुयादित्यर्थः ॥ इतिकात्यायनीमतमित्यनेनान्यतंत्रमतेन्यूनताबोधि तेतिभावः ॥ तमेवविभागमाह ॥ मार्कंडेयउवाचेति ॥ मार्कंडेयउवाचेतिप्रथमोमंत्रः ॥ तदुत्तरं सावर्णिशब्दआद्यःप्रथमोयेषामेतादृशायेश्लोकमंत्रास्तेसप्तदशेत्यर्थः ॥ अपिशब्दोनिश्चयार्थकः

पुनरर्धइति ॥ पुनःसंसारबंधेत्यर्धश्लोकात्मकोमंत्रः ॥ अत्राप्येकादशश्लोकमध्येआदिमा
र्धांतिमार्धकरणेनचद्वादशसंख्याकामंत्राबोध्याः ॥ तदुक्तंगौडपादीयेकारिकामृते ॥ ज्ञानम
स्तीत्यर्धमंत्रोदशमंत्रास्ततःपरम् ॥ संसारेत्यर्धमंत्रःस्यादिति ॥ यत्तुगुप्तवत्यांज्ञानमस्तीत्ये
कादशश्लोक्यांतुचरमश्लोकएवार्धमंत्रद्वयंनतुप्रथमश्लोकार्धज्ञानेपिसतीत्यादेरुत्तरार्धस्थकण
मोक्षादिनैवान्वयात्इत्युक्तंतदसत् ॥ उक्तवचनाविरोधेनाकिंहिवचनंनकुर्यादितिन्यायस्यजा

पुनरर्धःपुनाराजाभगवन्कोतिचार्धकम् ॥
ब्रवीतिचपुनःश्लोकःपुनरर्धंततोऋषिः ॥ ८ ॥

गरूकत्वेनचोक्तहेतोरप्रयोजकत्वात् ॥ अतएवकात्यायनीतंत्रेभगवताशिवेनसर्वत्रप्रतीकग्र
हणसंकेतेनमंत्रविभागोदर्शितः ॥ अत्रापिपरममूले ॥ अथोवाचऋषिर्ज्ञानमस्तीत्यारभ्यपा
र्वति ॥ सर्वेश्वरेश्वरीत्यंतामंत्राद्वादशकीर्तिताइतिसंकेतेनैवमंत्रविभागोदर्शितः ॥ यतोस्मिन्सं
केतशास्त्रेभाट्टादितंत्राणांप्रायशउपयोगाभावात् ॥ अतएववेदांतमूर्धन्यैर्गौडपादाचार्यैःसप्तश
तीभाष्येसप्तशतमंत्रप्रतीकग्रहणसंकेतेनैवव्याख्यानंकृतंतेनैवमंत्रविभागोपिदर्शितः ॥ नतुभा

का.टी.च. ष्टतंत्रादिन्यायानांकोलाहलःकृतः॥ यदितुकठिनतरविचारएवस्वारस्यंचेत्तदाव्यामोहकत्वप्र
७ संगः॥ तस्मान्मंत्रशास्त्रयुक्त्यैवतात्पर्यनिष्कासनीयमितिमंत्रविदामुपदेशः॥ एवंसतिगुप्तवत्या
मतिसूक्ष्मदर्शिभिर्भास्कररायैस्तंत्रविचारशैलींपरित्यज्यकेवलश्रौतस्मार्तवत्कठिनतरविचारे
णैवसर्वत्रमंत्रविभागःकृतइतितत्किंकारणमितितएवप्रष्टव्याः॥ वस्तुतस्तुमंत्रविभागबोधक
विशेषवचनाज्ञानमूलकएवसर्वत्रव्याख्यानोल्लेखइत्येवममप्रतिभाति॥ अतएवगुप्तवत्याप्रत्यु
वाचसतंवैश्यःप्रश्रयावनतोनृपामित्यर्धमंत्रविचारेनहिप्रतीकविशेषमुपादायायमर्धमंत्रस्तंत्रे
निर्दिष्टोयेनकिंहिवचनंनकुर्यादितिन्यायेनबहुष्वेवकुसृष्टिरंगीकार्यानाल्पयोरितिरियात्॥ तद
भावेत्वेतदेवनियामकमित्युक्तमितिदिक्॥ नचात्रतंत्रेपुण्यानिनामापिचेतांसीतिश्लोकमंत्रस्य
परममोहनफलकप्रयोगउपलभ्यतेतद्विरोधइतिवाच्यम्॥ अस्यसप्तशतमंत्रविभागस्यहोमतर्प
णकर्मण्येवेतिवक्ष्यमाणकात्यायनीतंत्रवचनसत्वेनाविरोधाभावात्॥ केवलमंत्रजपेतुनायंमंत्रवि
भागनियमः॥ अतएवकेवलमंत्रजपेभगवत्याकृतंसर्वमित्यारभ्यसार्धत्रिश्लोकात्मकस्यमं
त्रत्वमुक्तंसप्तशतमंत्रविभागेतुवेदसंख्यामंत्रविभागउक्तःसंगच्छते॥ किंचस्तुतासुरैरितिश्लोका ७
त्मकस्यसप्तशतमंत्रविभागेमंत्रत्वंसर्वेषामतेनिर्विवादम्॥ केवलमंत्रजपेतुकरोतुसानइत्यर्ध

स्यैवमंत्रत्वमुक्तंतंत्रांतरादौ ॥ एतेनेत्थंयदायदेतिमंत्रोपिव्याख्यातइत्यन्यत्रविस्तरः ॥ पुनाराजेति ॥पुनःराजोवाचेत्येकोमंत्रः ॥ पुनाराजेत्यत्रढ्रलोपेपूर्वस्यदीर्घोणइत्यनेनदीर्घः ॥ भगवन्केतीति ॥ चपुनःभगवन्काहिसेत्यर्धश्लोकात्मकएकोमंत्रः ॥ ब्रवीतीति ॥ ब्रवीतिकथमितिश्लोकात्मकएकोमंत्रः ॥ पुनरर्धमिति ॥ पुनस्तत्सर्वमित्यर्धश्लोकात्मकएकोमंत्रः ॥ तदुक्तंकात्यायनीतंत्रप्रकाशिकायाम् ॥ भगवन्केत्यर्धमंत्रइति ॥ अंत्यार्धस्यतूवाचांतास्तुयेमंत्रास्तेर्धमंत्रात्मकाःप्रियइतिहरगौरीतंत्रोक्तपरिभाषयामंत्रत्वंबोध्यम् ॥ एतेनभगवन्निितिश्लोकद्वयेचरमावर्धश्लोकमंत्राविति केनाचिदुक्तंतन्निरस्तम् ॥ ततोऋषिरिति ॥ ततस्तदनंतरंऋषिरुवाचेत्येकोमंत्रः ॥ ८ ॥ छ श्री छ श्री

पुनरर्धंपुनःश्लोकाःषण्मंत्राःपुनरर्धकम् ॥
निद्रांभगवतींविष्णोरतुलांतेजसःप्रभुः ॥ ९ ॥

पुनरर्धमिति ॥ पुनर्नित्यैवसेत्यर्धश्लोकात्मकएकोमंत्रः ॥ पुनःश्लोकाइति ॥ तथापीत्यारभ्यकारिणीमित्यंताःषट्श्लोकरूपामंत्राः ॥ पुनरर्धकामिति ॥ निद्रांभगवतीमित्यर्धश्लोका

त्मकोमंत्रः तत्रविशेषमाह ॥ निद्रामिति ॥ कात्यायनीतंत्रमतेनिद्रांभगवतींविष्णोरतुलां तेजसःप्रभुरित्येवपाठोबोध्यः ॥ यद्यपिस्तौमिनिद्रांभगवतींविष्णोरतुलतेजसइतिक्वचिद्दृश्य तेतथाप्येतत्तंत्रानुसारिभिर्नादर्त्तव्यइतीत्येवेत्येवकारेणबोधितमित्यर्थः ॥ तदुक्तंकात्यायनी तंत्रे ॥ नित्यैवसाजगन्नादौप्रभुरंतेष्टमंत्रकाइति ॥ अत्राप्याद्यिमार्धांतिमार्धप्रतीकग्रहणेनै वाद्यार्धत्यार्धयोर्मंत्रत्वंबोधितम् ॥ गौडपादीयेकारिकामृतेपि ॥ नित्यैवेत्यर्धमंत्रकः ॥ षण्मंत्रास्तु ततःप्रोक्तानिद्रामित्यर्धमंत्रकइति ॥ एतेननित्यैवेतिसप्तश्लोक्यांप्रथमश्लोकपूर्वोत्तरार्धयोर्मंत्र त्वंकेनचिदुक्तंतन्मूलतंत्राशयाज्ञानमूलकमितिबोध्यम् ॥ ९ ॥ श्री श्री

इत्येवपाठोमंत्राणामेकसप्ततिरेवहि ॥

ब्रह्मार्धश्लोकमंत्रोथश्लोकमंत्रास्त्रयोदश ॥ १० ॥

मंत्राणामिति ॥ एतावत्पर्यंतंमंत्राणांसंख्यैकसप्ततिर्बोध्येत्यर्थः ॥ एवशब्दोनिश्चयार्थकः ॥ हिशब्दोवाक्यालंकारे ॥ ब्रह्मेति ॥ ब्रह्मोवाचेत्येकोमंत्रः ॥ अर्धश्लोकइति ॥ त्वंस्वाहा त्वंस्वधेत्यर्धश्लोकात्मकोमंत्रः ॥ अथेति ॥ अथानंतरंसुधात्वामित्यारभ्यलाघ्वित्यंतास्त्रयोद शश्लोकात्मकामंत्राइत्यर्थः ॥ १० ॥ श्री छ श्री छ श्री

अर्धश्लोकइति ॥ बोधश्चेत्यर्धश्लोकात्मकएकोमंत्रः ॥ अत्रकेचित् ॥ त्वंस्वाहेत्यादिच तुर्दशश्लोक्यामंत्यश्लोकएवपूर्वोत्तरार्धयोर्मंत्रत्वंनाद्यार्धांत्यार्धयोरित्याहुस्तदसत्॥अथत्रह्मोवा चततस्त्वंस्वाहात्वंस्वधादिमाः ॥ महासुरांतिमामंत्राइतिकात्यायनीतंत्रव्याख्यानेगुरुचरणैरा द्यांत्ययोरेवमंत्रत्वस्वीकारात् ॥ अतएवाद्यांत्ययोःप्रतीकग्रहणंसंगच्छते ॥ किंचैकत्रानिर्णीतः शास्त्रार्थोऽसतिबाधकेऽन्यत्रापीतिन्यायस्यजागरूकत्वेनसर्वत्रादिमार्धांतिमार्धयोरेवमंत्रत्व

अर्धश्लोकऋषिश्चार्धश्लोकःश्लोकास्तुपंचवै ॥

स्यक्लृप्तत्वाच्च ॥ ध्वनितंचेदंश्रीमद्गौडपादाचार्यचरणैःसप्तशतीभाष्ये ॥ ऋषिरिति ॥ ऋषि रुवाचेत्येकोमंत्रः ॥ चार्धश्लोकइति ॥ चपुनःएवंस्तुतेत्यर्धश्लोकात्मकोमंत्रः ॥ श्लोकाइति ॥ विष्णोरित्यारभ्यविमोहितावित्यंताःपंचश्लोकात्मकामंत्राइत्यर्थः ॥

पुनरर्धमिति॥उक्तवंतेत्यर्धश्लोकात्मकोमंत्रः॥तदुक्तंकात्यायनीतंत्रे॥ऋषिरेवंस्तुतेत्याद्याःसप्त स्युःकेशवांतिमाइति॥अन्यत्रापि॥ एवंस्तुतेत्यर्धमंत्रःपंचमंत्रास्ततःपरम्॥ उक्तवंतावर्धमनुरि ति॥एतेनैवंस्तुतेतिश्लोकषट्केचरमश्लोकपूर्वोत्तरार्धयोर्मंत्रत्वंतत्रतावप्यातिबलोन्मत्तावितिप्र

थमार्धजातावित्यस्याध्याहारेणपूर्णत्वसंभवात् ॥ एवंस्तुतेत्यस्यार्धमंत्रत्वेउत्तरार्धस्थितस्यनिहंतुमित्यस्यपूर्वेणैवान्वययोग्यत्वात्तदुत्तरान्वयायोग्यत्वाच्चमंत्रत्वभंगापात्तिरित्यपास्तम् ॥ परस्परान्वयरूपहेतोर्मंत्रत्वसाधकाभावादित्युक्तमेवपूर्वमस्माभिः ॥ किंचांत्यार्धद्वयस्वीकारेउक्तवचनविरोधात् ॥ एकत्रनिर्णीतःशास्त्रार्थोऽसतिबाधकेऽन्यत्रापीतिन्यायविरोधाच्च ॥ मंत्राणामि

पुनरर्धंतुमंत्राणांसपंचनवतिःस्मृता ॥ ११ ॥

ति ॥ एतावत्पर्यंतंमंत्राणांसंख्यापंचनवतिर्जातेत्यर्थः ॥ मध्येमध्येसंख्यापिंडकथनंतुश्लोकसंख्यातोमंत्रसंख्याया अत्यंतविप्रकर्षेणगणकबुद्धिभ्रमनिरासार्थंबोध्यम् ॥ ११ ॥

भगवानिति ॥ भगवानुवाचेत्येकोमंत्रः ॥ अर्धमंत्राविति ॥ भवेतामितिश्लोकेखंडद्वयंकृत्वाधात्मकौद्वौमंत्रौभवतइतिशेषः ॥ ऋषिरिति ॥ ऋषिरुवाचेत्येकोमंत्रः ॥ श्लोकार्धकंपुनरिति ॥ पुनर्वंचिताभ्यामित्यर्धश्लोकात्मकोमंत्रः ॥ तदुक्तंहरगौरीतंत्रे ॥ वंचिताभ्यामयंमंत्रोह्यर्धमंत्रोजलप्रदइति ॥ छ छ छ छ छ छ छ छ छ छ छ छ छ छ

श्लोकमंत्रइति ॥ विलोक्येतिश्लोकात्मकएकोमंत्रः ॥ केचित्तुविलोक्येत्यर्धस्यपूर्वार्धोक्तकर्म

गवसाकांक्षत्वादुक्तविभागापेक्षयाविपरीतमंत्रविभागमाहुस्तदसत् ॥ उक्तप्रकारेणाद्यार्धस्य मंत्रत्वेसिद्धेत्यार्धस्यमंत्रत्वासंभवात् ॥ नचोवाचांतास्तुयेमंत्रास्तेर्धमंत्रात्मकाःप्रियइतिहर गौरतंत्रोक्तपरिभाषयांत्यार्धस्यापिमंत्रत्वसंभवइतिवाच्यम् ॥ तथात्वेमध्यार्धस्यापिमंत्रत्वं स्यात्तथाचसंख्याधिक्यापत्तेः ॥ तस्माद्दंचिताभ्यामयंमंत्रोह्यर्धमंत्रोजलप्रदइतिविशेषवचने नसामान्यवचनस्यबाधोवक्तव्यः ॥ अतएवकात्यायनीतंत्रेआद्यार्धस्यप्रतीकग्रहणंसंगच्छते ॥

भगवानर्धमंत्रौद्वौऋषिः श्लोकार्धकंपुनः ॥
श्लोकमंत्रोऋषिःश्लोकद्वयंमंत्रद्वयंभवेत् ॥ १२ ॥

तदुक्तंकात्यायनीतंत्रे ॥ अथर्षिर्वंचिताभ्यामित्येतन्मंत्रद्वयंशिवइति ॥ एवंसतिबलवत्प्रमाणमं तरासामान्यन्यायेनमंत्रविभागकरणंअथचप्राचीनाशयमज्ञात्वास्वग्रंथेतेषामपशब्दवर्णनंतल्ले खनंचमहतामनुचितमितिसुधियोविभावयंतु ॥ अत्रविलोक्येत्यर्धानंतरंप्रीतौस्वस्तवयुद्धेन श्लाघ्यस्त्वंमृत्युराघयोरित्यर्धमधिकंक्वचिद्दृश्यतेतदधिकमेवप्रकृततंत्रोक्ताध्यायश्लोकसंख्या विरोधात् ॥ ऋषिरिति ॥ ऋषिरुवाचेत्येकोमंत्रः ॥ श्लोकद्वयमिति ॥ तथेत्युक्त्वेत्यादिश्लो कद्वयात्मकंमंत्रद्वयंनात्रार्धमंत्रोस्तीतिभाव: ॥ १२ ॥ श्री छ श्री

लिकयोरेकमूर्त्तित्वान्मधुकैटभहननंकालिकयैवकृतमितिबोध्यमितिसंक्षेपः विस्तरस्त्वस्मत्कृतदुर्गामहोदधौद्रष्टव्यः ॥ इतिकारिकामृतव्याख्यानेचषकाभिधेप्रथमोध्यायः ॥ १३ ॥

अध्यायादावित्ति ॥ द्वितीयाध्यायस्यादौऋषिरुवाचेत्येकोमंत्रः॥मनुर्मंत्रः ॥ अत्रैवकारो इतरव्यावर्त्तकःतथाचास्मिन्द्वितीयेध्यायेएकएवोवाचमंत्रइतिभावः ॥ एवऋषिरित्यत्रऋत्यकइतिप्रकृतिभावात्संध्यभावः ॥ अष्टषष्टीति ॥ देवासुरमित्यारभ्याध्यायसमाप्तिपर्यंताअष्टषष्टिमिताःश्लोकास्तावंतएवमनवोमंत्राइत्यर्थः ॥ १४ ॥

अध्यायादावेवऋषिरुवाचेतिसकृन्मनुः ॥
अष्टषष्टिमिताःश्लोकास्तावंतोमनवःस्मृताः ॥ १४ ॥
एकोनसप्ततिःसर्वेध्यायेमंत्राद्वितीयके ॥
॥ इतिकारिकामृतेद्वितीयोऽध्यायः ॥ २ ॥

द्वितीयकेध्यायेसर्वेमंत्राःकतिसंतीत्यतआह ॥ एकोनसप्ततिरिति ॥ अस्मिन्द्वितीयेध्यायेनवषष्टिसंख्याकाःसर्वेमंत्राभवंतीतिशेषः ॥ तदुक्तंकात्यायनीतंत्रे ॥ द्वितीयेऋष्युवाचेति ११

नवषष्ठ्याहुतिःक्रमादिति ॥ अत्रतांविलोक्यमुदंप्रापुरित्यर्धानंतरंततोदेवाददुस्तस्यैस्वानि स्वान्यायुधानिचेत्यर्धमधिकंक्काचिद्दृश्यतेतदधिकमेव ॥ उक्तश्लोकसंख्याविरोधात् ॥ केचि त्तुततोदेवाददुरित्यर्धस्वीकृत्यकबंधायुयुधुर्देव्यागृहीतपरमायुधाइत्यर्धपरित्यज्यश्लोकसंख्या विरोधपरिहारंकुर्वंतितन्नोक्तार्धस्वीकारेविशेषवचनाभावेनानादिशिष्टाचारविरोधोदुष्परिहरइ तिद्रष्टव्यम् ॥ एवंसमंताव्द्याप्यसंस्थितामित्यस्योत्तरमष्टाशीतिसहस्रेणसखीभिःपरिवारिता

आदावृषिरुवाचैकःपंचत्रिंशत्ततःपरम् ॥ १५ ॥

मित्यर्धमधिकमेव ॥ एवंगजवाजिसहस्रौघैरनेकैरुग्रदर्शनः ॥ उग्रश्चात्युग्रवीर्यश्चातिनेतश्चमहा बलइतिचरणत्रयमधिकंक्कचिद्दृश्यतेतदप्येतंत्तंत्रानुसारिभिर्नादर्तव्यम् ॥ इतिकारिकामृत व्याख्यानेचषकाभिधेद्वितीयोध्यायः ॥

आदाविति ॥ तृतीयेध्यायेआदावृषिरुवाचेत्येकोमंत्रः ॥ पंचत्रिंशादिति ॥ ततःपरंनिह न्यमानामित्यारभ्यमुखरागाकुलाक्षरामित्यंताःपंचत्रिंशच्छ्लोकात्मकामंत्राइत्यर्थः ॥ अत्रसा र्धचतुस्त्रिंशच्छ्लोकानंतरमुवाचतंमदोद्धतेत्यर्धस्योवाचांतत्वेनोवाचांतास्तुयेमंत्राइतिहरगौरीतं

तोक्तपरिभाषयामंत्रत्वंप्राप्तंतथापिततस्तृतीयेध्यायेतुऋषिःप्रोवाचदेशिके ॥ पंचात्रिंशत्ततः श्लोकमंत्राज्ञेयावराननइतिकात्यायनीतंत्रस्थविशेषवचनेनोक्तसामान्यवचनस्यबाधात् ॥किंच ॥ नवषष्ठ्याहुतिःक्रमादितिमंत्रसंख्याविरोधात् ॥ एवमग्रेपिद्रष्टव्यम् ॥ १५ ॥

तदेवाह ॥ निहन्यमानाद्याइति ॥ देव्युवाचेति ॥ पंचात्रिंशच्छ्लोकानंतरंदेव्युवाचेत्येकोमंत्रः गर्जगर्जेति॥ अपरोगर्जगर्जेतिश्लोकात्मकएकोमंत्रः ॥ १६ ॥

निहन्यमानाद्याःश्लोकामुखरागाकुलाक्षरम् ॥
इत्यंतादेव्युवाचैकोगर्जगर्जेतिचापरः ॥ १६ ॥
ऋषिवाक्यंततश्चैवमुक्त्वेतिश्लोकपंचकम् ॥
चतुश्चत्वारिंशदेवंसर्वेमंत्रास्तृतीयके ॥ १७ ॥

इतिकारिकामृतेतृतीयोऽध्यायः ॥ ३ ॥

ऋषिवाक्यमिति ॥ ऋषिरुवाचेत्येकोमंत्रः ॥ ततश्चैवेति ॥ तदनंतरमेवमुक्त्वेत्यारभ्यगणाइत्यंताःपंचश्लोकात्मकामंत्राइत्यर्थः ॥ अध्यायमंत्रसंख्याआह॥चतुरिति॥एवंतृतीयेध्यायेस

र्वैमंत्राश्चतुश्चत्वारिंशत्संख्याकाभवंतीतिशेषः ॥ तथाचैकचत्वारिंशत्श्लोकरूपाः ऋषिद्वयंदे व्युक्तिरेकेतिमिलित्वाचतुराधिकचत्वारिंशत्संख्याजाताइतिभावः ॥ तदुक्तंकात्यायनीतंत्रे ॥ एवमाहुतयस्तत्रचत्वारिंशच्चतुर्युताइति ॥ १७ ॥ इतिकारिकामृतव्याख्यानेचषकाभिधेतृती योध्यायः ॥ ३ ॥

ततइति ॥ ततस्तदनंतरंचतुर्थेध्यायेप्रथमं ऋषिरुवाचेत्येकोमंत्रः ॥ श्लोकाइति ॥ ततस्ततः

ततश्चतुर्थेऋष्युक्तिश्लोकाःषड्विंशतिस्ततः ॥
ऋष्युक्तिश्चततश्चैवश्लोकौद्वौमंत्ररूपिणौ ॥ १८ ॥



परंषड्विंशतिश्लोकात्मकामंत्राइत्यर्थः ॥ तत्रशक्रादयइत्यारभ्यनमस्तेइत्यंतावृत्तछंदस्कास्तत श्चत्वारःशूलेनेत्यारभ्यरक्षसर्वतइत्यंताःकवचरूपाअनुष्टुप्छंदस्काइतिविवेकः ॥ ऋष्युक्ति रिति ॥ ऋषिरुवाचेत्येकोमंत्रः ॥ ततश्चैवेति ॥ ततस्तदनंतरमेवंस्तुतासुरैरित्यारभ्यसुरानि त्यंतौद्वौश्लोकात्मकौमंत्रावित्यर्थः ॥ १८ ॥

देव्युक्तिरिति ॥ देव्युवाचेत्येकोमंत्रः ॥ अप्यर्धमंत्रइति ॥ व्रियतांत्रिदशाइत्यर्धश्लोका

रमकोमंत्रः ॥ अत्रव्रियतामित्यर्धश्लोकानंतरंददाम्यहमतिप्रीत्यास्तवैरेभिःसुपूजिता ॥ कर्त्तव्यमपरंयच्चदुष्करंतन्निवेद्यतामितिश्लोकःक्वचित्पठ्यतेतथाप्येतत्तंत्रानुसारिभिर्नादर्त्तव्यइतिभावः ॥ अन्यथावक्ष्यमाणाध्यायमंत्रसंख्याविरोधात् ॥ तदुक्तंकात्यायनीतंत्रे ॥ देव्युक्तिर्व्रियतांमंत्रःकथितःषोडशाक्षरइति ॥ देववागिति ॥ अथानंतरंदेवाऊचुरित्येकोमंत्रः ॥

भगवत्येति ॥ भगवत्याकृतंसर्वमित्यर्धश्लोकात्मकएकोमंत्रः ॥ १९ ॥

देव्युक्तिश्चाप्यर्धमंत्रोव्रियतामथदेववाक् ॥
भगवत्याकृतंसर्वमित्यर्धश्लोकमंत्रकः ॥ १९ ॥



यदयमिति ॥ यदयंनिहतःशत्रुरित्यादित्रयःश्लोकात्मकामंत्राइत्यर्थः ॥ अत्रेत्याद्याःश्लोकमंत्रकाइतिबहुवचनंतुकापिंजलाधिकरणन्यायेनत्रित्वेएवपर्यवसन्नमितिबोध्यम् ॥ नचसार्धत्रयश्लोकेषुउवाचांतास्तुयेमंत्राइतिहरगौरीतंत्रोक्तपरिभाषयांत्यार्धस्यैवमंत्रत्वमितिवाच्यम् ॥ वक्ष्यमाणभुवनेशीसंहितावचनेनोक्तसामान्यवचनस्यबाधात् ॥ अतएवकात्यायनीतंत्रेपि ॥ भगवत्याकृतंवदेदित्यनेनाद्यार्धस्यैवमंत्रत्वमुक्तम् ॥ तदुक्तंभुवनेशीसंहितायाम् ॥ भ

गवत्येत्येतदर्धसर्वाशापूरकंस्मृतामिति ॥ एतेनभगवत्यादित्रयःश्लोकरूपामंत्रास्ततोर्धश्लोक मंत्रइतिकेषांचिदुक्तिःप्रत्युक्ता ॥ केवलमंत्रजपेतुभगवत्येत्यादिसर्वदाविकेइत्यंतोऽप्युष्ट श्लोकात्मकएकएवमंत्रोद्वादशाधिकशताक्षरःसर्वापत्तिनिवारणफलकस्तंत्रांतरेप्रयोगउक्तइ तिबोध्यम् ॥ ऋषिरिति ॥ ऋषिरुवाचेत्येकोमंत्रः ॥ श्लोकाइति ॥ इतिप्रसादितेत्यादिकथया मितइत्यंताश्चत्वारःश्लोकात्मकामनवोमंत्राःपरिकीर्त्तिताइत्यर्थः ॥ २० ॥

यदयंनिहतःशत्रुरित्याद्याःश्लोकमंत्रकाः ॥
ऋषिःश्लोकास्तुचत्वारोमनवःपरिकीर्त्तिताः ॥ २० ॥
सर्वेश्लोकाश्चतुर्थेतुषट्त्रिंशत्कथिताःपुनः ॥
पंचत्रिंशच्छ्लोकरूपाःपंचोवाचपदांकिताः ॥ २१ ॥

अथाध्यायश्लोकसंख्याआह ॥ सर्वेश्लोकाइति ॥ स्पष्टार्थः ॥ मंत्रसंख्याआह ॥ पंचत्रिंश दिति ॥ तत्रपंचत्रिंशच्छ्लोकरूपादेवानांदेव्याश्चैकैकोक्तिःऋषिवाक्यत्रयंएवंपंचाथचार्धमंत्र द्वयंतथाचद्विचत्वारिंशत्संख्याकाःसर्वेमंत्राभवंतीतिशेषः ॥ तदुक्तंकात्यायनीतंत्रे ॥ श्लोका

श्चतुर्थेध्यायेतुपंचत्रिंशत्परेश्वरि ॥ अर्धमंत्रद्वयेनैवचत्वारिंशद्द्वियुक्पुनरिति ॥ अत्राध्यायत्र

यात्मकस्यमध्यमचरित्रस्यदेवतामहालक्ष्मीर्बोध्या ॥ महालक्ष्म्यास्त्रिभेदतइतिकात्यायनीतं
त्रोक्तेः ॥ इतिकारिकामृतव्याख्यानेचषकाभिधेचतुर्थोध्यायः ॥ ४ ॥

अथपंचमाध्यायस्यश्लोकसंख्याआह ॥ षट्सप्ततिरिति ॥ २२ ॥

अर्धमंत्रद्वयेनैवचत्वारिंशद्द्वयाधिकाः ॥
इतिकारिकामृतेचतुर्थोध्यायः ॥ ४ ॥
षट्सप्ततिश्लोकयुक्तेध्यायेमंत्रास्तुपंचमे ॥ २२
एकोनत्रिंशदधिकंशतंकात्यायनीमते
ऋषिवाक्यंततश्चैवपुराशुंभादयश्चषट् ॥ २३ ॥

मंत्रसंख्याआह ॥ एकोनत्रिंशदिति ॥ अस्मिन्पंचमेध्यायेषट्सप्ततिश्लोकयुक्तेवक्ष्यमा
णमंत्रविभागेनैकोनत्रिंशदधिकशतंमंत्राभवंतीतिशेषः ॥ तमेवविभागमाह ॥ ऋषिवाक्य 

मिति ॥ ऋषिरुवाचेत्येकोमंत्रः ॥ पुरेति ॥ ततःपुराशुंभमित्यादिषट्श्लोकात्मकामंत्राइत्यर्थः ॥ क्वचिद्देशेपंचमाध्यायारंभेश्लोकत्रयमधिकंपठ्यते ॥ पुराशुंभनिशुंभाख्यावसुरौघोरदर्शनौ ॥ अप्राप्तयौवनावेवचेरतुस्तपउत्तमम् ॥ वर्षाणामयुतंदिव्यंराजन्विस्मापनप्रदम्॥निराहारौयतात्मानौपुष्करेलोकपावने ॥ ततःप्रसन्नोभगवान्ब्रह्मालोकपितामहः ॥ ततोभिलषितान्कामांस्तयोःप्रादादनुत्तमानितितदधिकमेव ॥ वक्ष्यमाणसंख्याविरोधात् ॥ २३ ॥

श्लोकमंत्रास्ततोदेवाऊचुश्चैवाष्टमोमनुः ॥
नमोदेव्यादिकाःश्लोकाःपंचमंत्राःप्रकीर्तिताः ॥ २४ ॥
त्रयोदशैवंमंत्रास्तुयादेवीत्यादयोपिच ॥
एकविंशतिकाःश्लोकाश्चांत्यंतास्तेषुमंत्रकाः ॥ २५ ॥



देवाऊचुरिति ॥ ततोदेवाऊचुरित्येकोष्टमोमनुर्मंत्रइत्यर्थः ॥ नमोदेव्यादिकाइति ॥ नमोदेव्यैमहादेव्याइत्यारभ्यकृत्यैनमोनमइत्यंताःपंचश्लोकात्मकामंत्राः ॥ २४ ॥

एवमेतावत्पर्यंतंपंचमेध्यायेत्रयोदशसंख्यामंत्राजाताइत्यतआह ॥ त्रयोदशैवमिति ॥

यादेवीति ॥ यादेवीसर्वभूतेषुविष्णुमायेतिशब्दितेत्यारभ्यभ्रांतिरूपेणसंस्थितेत्यंतायएकविंशतिःश्लोकास्तेषुश्लोकेषुप्रतिश्लोकंखंडत्रयेणत्रयोमंत्राःकार्यास्तथाचैकविंशतिश्लोकेषुसर्वे मंत्रास्त्रिषष्ठिसंख्याकाज्ञेयाइत्यर्थः ॥ २५ ॥

पुनरिति ॥ पुनरेकविंशतिश्लोकानंतरमिंद्रियाणामधिष्ठात्रीत्येकश्लोकात्मकोमंत्रः ॥ चितिरूपेतिचेति ॥ अत्रापिपूर्वोक्तरीत्यात्रयोमंत्राःकार्याइत्यर्थः ॥ २६ ॥

प्रतिश्लोकंत्रयोमंत्राज्ञेयाःसर्वेत्रिषष्ठिकाः ॥
पुनःश्लोकात्मकोमंत्रश्चितिरूपेतिचत्रयम् ॥ २६ ॥
त्रयोविंशतिश्लोकेषुमंत्रावैसप्तषष्टिकाः ॥
यादेवीसर्वभूतेषुविष्णुमायातिशब्दिता ॥ २७ ॥



त्रयोविंशतिरिति ॥ एवंत्रयोविंशतिश्लोकेषुसप्तषष्ठिर्मंत्राजाताइत्यर्थः ॥ अत्रपुनःपुनःसंख्यापिंडकथनंतुश्लोकसंख्यातोमंत्रसंख्याया अत्यंतविप्रकर्षेणगणकबुद्धिभ्रमनिरासार्थंबोध्य

म् ॥ अथप्रतिश्लोकेखंडत्रयेणत्रयोमंत्राःकार्याइत्युक्तंतत्कथंखंडत्रयंकर्त्तव्यमित्यतआह॥यादेवीसर्वभूतेष्विति ॥ २७ ॥

यादेवीत्यारभ्यनमस्तस्याइत्यंतांविंशत्यक्षरात्मकंप्रथमखंडंकार्यम् ॥ ततोनमस्तस्याइतिचतुरक्षरात्मकंचतुर्थ्यंतंद्वितीयखंडम् ॥ २८ ॥

नमस्तस्याइतिप्रोक्तोविंशत्यक्षरकोमनुः ॥
नमस्तस्याइतिप्रोक्तश्चतुरक्षरकोमनुः ॥ २८ ॥
अष्टाक्षरस्तृतीयोपिनमस्तस्यैनमोनमः ॥
एवंद्वाविंशतिश्लोकैर्ज्ञेयंमंत्रत्रयंबुधैः ॥ २९ ॥

ततोनमस्तस्यैनमोनमइत्यष्टाक्षरात्मकंतृतीयखंडंकार्यम् ॥ एवमिति ॥ एवमुक्तरीत्याद्वाविंशतिश्लोकैर्मंत्रत्रयंकार्यम्॥तथाचयादेवीसर्वभूतेषुविष्णुमायेत्यादिचितिरूपेणेत्यंतायेत्रयोविंशतिःश्लोकास्तउक्तप्रकारेणसप्तषष्ठिसंख्याकाजाताः॥ अथचपूर्वैस्त्रयोदशमंत्रैःसहमेलनेनाशीतिर्मंत्रसंख्योदाहृताकथितेत्यर्थः ॥ त्रयोदशश्लोकैरित्यत्रश्लोकशब्दोमंत्रपरः ॥ तदुक्तंकात्या

यनीतंत्रेचतुस्त्रिंशेपटले ॥ वेदाक्षरोमनुर्मध्येमहालक्ष्म्याःप्रतोषकृत् ॥ लक्ष्मीसूक्तेतुताशब्दे
नायमेवोच्यतेशिवइति ॥ अनेनवचनेनमध्यखंडस्यवेदाक्षरत्वप्रतिपादनेनपूर्वोत्तरखंडयोः
प्रतिपादनमर्थादुक्तंभवतीति ॥ अत्रकेचिन्न्यायरसिकाः ॥ विष्णुमायादितोभ्रांतिरूपांतेत्री
ण्यिषष्ठियुक् ॥ अवतारेपृथक्मंत्रास्तेषांत्रिषष्ठिराहुतिरितिकात्यायनीतंत्रवचनव्याख्यानावस
रेसंमुग्धाकारविभागदर्शनात्कथंविभागःकार्यइतिविमर्शेबहवःपक्षाःसंभवंति ॥ तथाहि ॥
यादेवीत्यादौपूर्वार्धमेकोमंत्रः॥उत्तरार्धेतुसमंस्यादश्रुतत्वादितिन्यायेनद्वौपादौद्वौमंत्रौ ॥ अथ
वाद्वाविंशत्यक्षरश्चतुरक्षरःषडक्षरइतित्रयोमंत्राः ॥ अथवाविंशत्यक्षरःषडक्षरौद्वाविति ॥ अत्र
मध्यममंत्रस्यनमोहिरण्यबाहवइत्यस्येवोभयतोनमस्कारत्वसंभवात् ॥ अथवाद्वितीयतृती
यनमःशब्दयोःपूर्वत्रपरत्रापिवारद्वयमन्वयः ॥नमोभवायचरुद्रायचनमःशर्वायचेत्यादौद्विती
यादिनमःशब्दानांकाकाक्षिवदुभयत्रावृत्तिस्वीकारेणतेषामुभयतोनमस्कारात्मकत्वपक्षस्या
पिस्वीकारात् ॥तेनद्वाविंशत्यक्षराष्टाक्षरषडक्षराइतित्रयोमंत्राभवंति ॥नमोनमइत्येववानमइ
त्येववाभिन्नोमंत्रः ॥ मध्यमःषडक्षरोष्टाक्षरोवादशाक्षरोवाचतुरक्षरोवेतरांशैकःवसिष्ठस्मृतौ
शूद्रधर्मप्रकरणेस्याभ्यनुज्ञातोनमस्कारोमंत्रइतिवाक्यस्यनमइतिशब्दमात्रंव्यक्षरोमंत्रइतिव्या 

ख्यानदर्शनात्॥ अतएवनमःशद्वौद्वावपिभिन्नौमंत्रावन्यःसर्वएकइत्यादयस्तत्रेदशसंकटस्थलेविशेषवचनेनानिर्णयःकर्त्तव्यस्तदभावेहिजैमिनिप्रभृतीभिःपरिशोधितन्यायेननिर्णयःकर्त्तव्यस्तत्रचयातेअग्नेअयाशयारजाशयाहराशयातनूर्वर्षिष्ठागव्हरेष्ठोग्रंवचोअपावधीस्त्वेषंवचोअपावधीरितिमंत्रेऽयाशयादित्रयेप्रत्येकंपूर्वभागेयातेअग्नइत्यस्यांतेतनूरित्यादेश्चयोगेनमंत्रत्रयस्वरूपस्यानुषंगोवाक्यसमाप्तिःसर्वेषुतुल्ययोगत्वादित्यधिकरणेनिर्णयदर्शनात्तेनैवन्यायेन

पूर्वैस्त्रयोदशश्लोकैःसहाशीतिरुदाहृता॥
स्तुतासुरैरितिश्लोकद्वयंचैवततोऽपिः॥ ३०॥

नमकचरममंत्रस्यैकत्वेनपाठितस्यापिहोमेविभज्यमंत्रत्रयकल्पनापेक्षयायेपृथिव्यामित्यादित्रयेनमोरुद्रेभ्यइतिपूर्वभागस्ययेषामन्नमिषवस्तेभ्यइत्यादेरुत्तरभागस्यचपूर्वोत्तरस्थानेप्रत्येकमनुषंगेणमंत्रत्रयस्यसर्वसंमतत्वाच्च॥ तेनपूर्वार्धस्यतुप्रतिमंत्रंपूर्वभागेऽनुषंगः॥ चरमाक्षरचतुष्टयस्यतुप्रातिमंत्रमंतेनुषंगः॥ तथाचयादेवीसर्वभूतेषुविष्णुमायेतिशद्धितानमस्तस्यैनमोनमइतिचतुर्विंशत्यक्षरोऽष्टाक्षरैस्त्रिभिःपादैरेकोगायत्रीछंदस्कोमंत्रःसिद्धोयमेवचत्रिःपठनीयः॥

देवतातुभिन्नानुसंधेयेत्याहुस्तदापातरमणीयम् ॥ उक्तप्रकारोहिविशेषवचनाभावेतिरमणीयए
व ॥ परंत्वत्रपूर्वोक्तवचनसत्वेनविरोधात् ॥ वचनन्यायविरोधेवचनस्यैवप्राबल्यात् ॥ अत
एवाभियुक्ताआहुः ॥ पुराणंमानवोधर्मःसांगावेदाश्चिकित्सितम् ॥ आज्ञासिद्धानिचत्वारिन
हंतव्यानिहेतुभिरिति ॥ भवदुक्तप्रकारेणमंत्रविभागस्वीकारेवक्ष्यमाणमालामंत्रार्णसंख्यावि
रोधाच्च॥किंच ॥ गौडपादीयेकारिकामृतेपि ॥ विंशत्यक्षरपर्यंतंप्रथमोमंत्रईरितः ॥ वेदाक्षरो
द्वितीयस्तुतृतीयोष्टाक्षरःस्मृतइति ॥ अनेनवचनेनाप्युक्तमंत्रविभागस्यैवस्पष्टंप्रतिपादनात्
॥ किंच ॥ डामरेश्वरतंत्रेपिनमस्तस्यैतुषट्षष्टिःशेषार्धश्लोककाहुतिरित्यत्रभगवताशिवेनया
देवीतितुषट्षष्टिरितिविहायनमस्तस्याइतिपदोपादानेननमस्तस्याइतिचतुर्थ्यंतस्यवेदाक्षर
स्यैवमंत्रत्वप्रतिपादनात् ॥ नन्वेवमपित्रयाणांमध्येकस्यनमस्तस्याइत्यस्यमंत्रत्वमितिनिर्णे
तुमशक्यमितिचेन्न ॥ वेदाक्षरोमनुर्मध्येमहालक्ष्म्याःप्रतोषकृदितिकात्यायनीतंत्रवचनगत
मध्यपदोपादानेनमध्यमस्यनमस्तस्याइत्यस्यमंत्रत्वनिर्णयात् ॥ अतएवमहालक्ष्म्याःप्रतोष
कृदितिविशेषणंसंगच्छते ॥ एतेनात्रयेबहवःपक्षाःपूर्वमुक्तास्तेपिनिर्मूलाइतिसिद्धम् ॥ तस्मा

द्विंशत्यक्षरचतुरक्षराष्टाक्षराणामेवक्रमेणमंत्रत्वंश्रीमद्गौडपादाचार्यादिसकलशिष्टसंमतमिति कृतमतयोमात्सर्यमुत्सार्यविदांकुर्वंतु ॥ अत्रविशेषस्तुमत्कृतावन्यत्रद्रष्टव्यः ॥ प्रकृतमनु सरामः ॥ अत्रविष्णुमायेत्यारभ्यभ्रांत्यंतैकविंशतिश्लोकेषुतंत्रांतरोक्तलक्ष्म्याउपरिधृतिस्तुष्टे रुपरिपुष्टिश्चेतिमंत्रद्वयमधिकंतथास्फूर्त्तिमेधाद्वयमपिपठ्यमानंप्रकृततंत्रानुसारिभिर्नादर्त्तव्य मितिभावः ॥ अथविष्णुमायाद्येकविंशतिदेवतानांसंग्रहः ॥ प्रथमाविष्णुमायोक्ताद्वितीयाचे तनाततः ॥ बुद्धिर्निद्राक्षुधाछायाशक्तिस्तृष्णातथाष्टमी ॥ क्षांतिर्जातिरथोलज्जाशांतिःश्र द्धात्रयोदशी ॥ कांतिर्लक्ष्मीस्ततोवृत्तिःस्मृतिरूपेणसंस्थिता ॥ दयातुष्टिस्ततोमाताभ्रांतिरि त्येकविंशतिरिति ॥ स्तुतासुरैरिति ॥ स्तुतासुरैःपूर्वमित्यादिविनम्रमूर्त्तिभिरित्यंतंश्लोकद्वयं मंत्रद्वयंभवतीतिशेषः ॥ ततस्तुतेतियुगलमितिकात्यायनीतंत्रोक्तेः ॥ एतेनकरोतुसानइत्यु त्तरार्धस्यमंत्रत्वंतुकेवलमंत्रजपएवबोध्यमित्युक्तंभवतीति ॥ ततोऋषिरिति ॥ तदनंतरंऋषि रुवाचेत्येकोमंत्रः ॥ २९ ॥ ॥ ३० ॥

पुनरिति ॥ पुनरुवाचमंत्रानंतरमेवंस्तवादीत्यारभ्यत्वयाकस्मान्नगृह्यतइत्यंताःसप्तदश

श्लोकरूपामंत्राइत्यर्थः ॥ ऋषिरिति ॥ ऋषिरुवाचेत्येकोमंत्रः ॥ श्लोकत्रयमिति ॥ ततो निशम्येत्यादित्रयः श्लोकात्मकामंत्राः ॥ दूतश्चेति ॥ चपुनर्दूतउवाचेत्येकोमंत्रः ॥ नव श्लोकाइति ॥ देविदैत्येश्वरादिव्रजांतानवश्लोकरूपामंत्राः ॥ ऋषिरिति ॥ ऋषिरुवाचेत्ये कोमंत्रः ॥ एकइति ॥ अत्रैकशब्देनेत्युक्तासातदादेवीत्येकश्लोकात्मकोमंत्रः ॥ एकोन्यार्थे प्रधानेचेतिकोशादेकशब्दःप्रधानवाचकः ॥ तेनतृतीयचरित्रेसरस्वत्याःप्राधान्यात्सरस्वतीप्र

पुनःसप्तदशश्लोकाऋषिःश्लोकत्रयंततः ॥
दूतश्चैवनवश्लोकाऋषिरेकोंबिकाततः ॥ ३१ ॥

धानोयंमंत्रः ॥ तदुक्तंकात्यायनीतंत्रे ॥ इत्युक्तेत्यादिमंत्रेणेहैकेनचसरस्वतीति ॥ अस्यमंत्र स्यदीक्षापूर्वकलक्षजपतोजिव्हाजाड्यनाशइतिगुरूपदेशः ॥ अंबिकेति ॥ अंबिकापदेनदे वीतेनदेव्युवाचेत्येकोमंत्रः ॥ ३१ ॥

चतुःश्लोकीति ॥ ततःसत्यमुक्तमित्यारभ्यलघ्वित्यंताश्चत्वारःश्लोकात्मकामंत्राः ॥ पुन र्दूतइति ॥ पुनर्दूतउवाचेत्येकोमंत्रः ॥ चतुःश्लोकीति ॥ अवलिप्तेत्यादिगमिष्यसीत्यंताश्च

त्वारः श्लोकात्मकामंत्राः ॥ पुनःशिवेति ॥ शिवादेवी ॥ तेनदेव्युवाचेत्येकोमंत्रः ॥ श्लोकद्वय मिति॥ एवमेतदित्यारभ्यकरोतुयदित्यंतंश्लोकात्मकंमंत्रद्वयमित्यर्थः॥ मिलित्वेति ॥ एतच्छ्लो कद्वयंमिलित्वास्तुतासुरैरित्यारभ्यदेव्युवाचेत्यंताएकोनपंचाशन्मंत्राजाताइत्यर्थः ॥ ३२ ॥

चतुःश्लोकीपुनर्दूतश्चतुःश्लोकीपुनःशिवा ॥
श्लोकद्वयंमिलित्वातुचत्वारिंशन्नवाधिकाः ॥ ३२ ॥

पूर्वोक्ताशीतिसंयोगादेकोनत्रिंशदुत्तरम् ॥
शतमेवंतुविज्ञेयमाहुतीनांचपंचमे ॥ ३३ ॥

इतिकारिकामृतेपंचमोध्यायः ॥ ५ ॥

अस्याध्यायस्यमंत्रसंख्याआह ॥ पूर्वोक्तेति ॥ एकोनत्रिंशदुत्तरशतंमंत्राभवंतीतिशेषः ॥ यद्य प्यध्यायारंभएवमंत्रसंख्योक्तातथापिश्लोकसंख्यातोमंत्रसंख्यायाश्चातीवभेदात्गणकबुद्धि भ्रमानिरासार्थंद्विर्बद्धंसुबद्धमितिन्यायेनचपुनरुक्तिर्नदोषायेति ॥ ३३ ॥

अस्याध्यायस्यदेवतामहासरस्वतीबोध्येति ॥ इतिकारिकामृतव्याख्यानेचषकाभिधेपंचमोध्यायः ॥ ५ ॥

विंशतिरिति ॥ अस्मिन्षष्ठेध्यायेविंशतिश्लोकसंयुक्तेइत्याकर्ण्येत्यारभ्यमथांबिकामित्यंताः सर्वेश्लोकरूपामंत्राःपरिकीर्त्तिताः ॥ एकादेवीऋषित्रयम् ॥एवंचचत्वारउवाचांताःविंशतिसंख्याकाश्लोकात्मकामिलित्वासर्वेमंत्राश्चतुर्विंशातिसंख्याबोध्याइत्यर्थः ॥ ३४ ॥

विंशतिश्लोकसंयुक्तेषष्ठेध्यायेप्रकीर्त्तिताः ॥
सर्वेश्लोकामंत्ररूपादेव्येकाथऋषित्रयम् ॥ ३४ ॥
संहत्याहुतयोज्ञेयाश्चतुर्विंशातिसंख्यकाः ॥
इतिकारिकामृतेषष्ठोध्यायः ॥ ६ ॥

अस्याध्यायस्यदेवताधूम्राक्षीतिकात्यायनीतंत्रेस्पष्टम् ॥ इतिकारिकामृतव्याख्यानेचषकाभिधेषष्ठोध्यायः ॥ ६ ॥

अथसप्तमाध्यायस्यश्लोकसंख्याआह ॥ पंचविंशतीति ॥ पंचविंशतिश्लोकसंयुक्तेसप्तमे 

ध्यायेसर्वेश्लोकात्मकाएवमंत्राःपरिकीर्त्तिताइत्यतआह ॥ सर्वेश्लोकामंत्ररूपाइति ॥ ऋषीति ॥ उवाचपदांकितौद्वौमंत्रौ ॥ तथाचसर्वेमंत्राःसप्तविंशतिसंख्यकाबोध्याइत्यर्थः ॥ तदुक्तंकात्यायनीतंत्रे ॥ सप्तविंशत्यदोदेविभवंत्याहुतयःक्रमादिति ॥ अस्याध्यायस्यापिदेवताधूम्राक्षीत्यपितत्रैवस्पष्टम् ॥ तेनतदुपासकेनेदमध्यायद्वयमवश्यंपठनीयमित्यर्थः ॥ ३६

पंचविंशतिसंयुक्तेध्यायेचैवतुसप्तमे ॥ ३५ ॥
सर्वेश्लोकामंत्ररूपाऋष्युवाचद्वयंतथा ॥
सप्तविंशतिरेवंतुमंत्रसंख्याःप्रकीर्त्तिताः ॥ ३६ ॥
इतिकारिकामृतेसप्तमोध्यायः ॥ ७ ॥

इतिकारिकामृतव्याख्यानेचषकाभिधेसप्तमोध्यायः ॥ ७ ॥

अथाष्टमाध्यायस्यश्लोकसंख्याआह ॥ सार्धेति ॥ अत्रैकषष्टिश्लोकरूपामंत्राः ॥ अंतेध्यायांतेतेषांमातृगणइत्यर्धश्लोकात्मकोमंत्रइत्यर्थः ॥ तत्रप्राकृतमंत्रस्यमध्येविच्छेदकरणापेक्षयांतेविद्यमानस्यैवार्धस्यमंत्रत्वमुचितम् ॥ पूर्णानांनिवेशोत्तरमेवार्धस्यनिवेशइतिन्यायात् ॥

किंचश्रीहर्षकृतमंत्रगुच्छेप्यंत्यार्धस्यैवमंत्रत्वमुक्तम् ॥ श्रीमद्गौडपादाचार्यचरणैःसप्तशतीभा ष्येप्यंत्यार्धस्यप्रतीकग्रहणेनचतस्यैवमंत्रत्वंध्वनितम् ॥ एतेनाविशेषवचनाभावेमुखेनकाली जगृहेइत्यस्यार्धमंत्रत्वमुक्तवंतःप्रत्युक्ताः ॥ कात्यायनीतंत्रटीकायांप्रकाशिकासमाख्याया मप्यंत्यार्धस्यैवमंत्रत्वमुक्तमित्यन्यत्राविस्तरः ॥ ३७ ॥

अष्टमाध्यायस्यमंत्रसंख्याआह ॥ एवमिति ॥ एवमुक्तरित्यैकषष्टिश्लोकात्मकामंत्रा

साधैकषष्टिश्लोकाढ्येऽष्टमेध्यायेप्रकीर्त्तिताः ॥
एकषष्टिश्लोकमंत्राअंतेर्धश्लोकमंत्रकः ॥ ३७ ॥



एकोर्धमंत्रअध्यायारंभेऋषिरुवाचेत्येकोमंत्रःसर्वेमंत्रामिलित्वात्रिषष्ठ्याहुतयोभवंतीतिशे षः ॥ अस्याध्यायस्यनवदेवताः ॥ ताश्चविधिशिवगुहविष्णुवाराहनृसिंहशक्राणांशक्तयः सप्त ॥ एकाचंडिकाऽपरारक्ताक्षीयाचंडिकायाललाटफलकान्निःसृता ॥ एवंनव ॥ एतच्च मूलेएवस्पष्टम् ॥ कात्यायनीतंत्रेपि ॥ रक्ताक्षीदेवताचाष्टौमहाशक्तयःप्रकीर्त्तिताइति ॥ म हाशक्तयइत्यत्रक्तिचूक्तौचसंज्ञायामितिशकेःक्तिचिक्तदिकारादितिङीष्बोध्यः ॥ रक्ताक्ष्या

एवनामांतरंशिवदूतीति ॥ एतदपिमूलएवस्पष्टम् ॥ एतेननवदेवतोपासकैरयमध्यायोऽवश्यं पठनीयइतिभावः ॥ इतिकारिकामृतव्याख्यानेचषकाभिधेऽष्टमोध्यायः ॥ ८ ॥

अथनवमाध्यायस्यश्लोकसंख्याआह ॥ एकोनेति ॥ नवमेध्यायेनवाधिकास्त्रिंशच्छ्लोका

एवमादौऋषिश्चैवात्रिषष्ठ्याहुतयस्तस्था ॥

इतिकारिकामृतेऽष्टमोध्यायः ॥ ८ ॥

एकोनचत्वारिंशच्चश्लोकैर्युक्तेसमीरिताः ॥ ३८ ॥

अध्यायेनवमेमंत्रास्तावंतोथमनुद्वयम् ॥

राजाऋषिश्चेतिचैकचत्वारिंशन्मनुस्त्वयम् ॥ ३९ ॥

इतिकारिकामृतनवमोध्यायः ॥ ९ ॥

स्तावंतएवमनवः ॥ अथानंतरंमनुद्वयंराजोवाचऋषिरुवाचेतिमंत्रद्वयंतेनसर्वेमंत्राश्चैकच त्वारिंशत्संख्यकाजाताइत्यर्थः ॥ मनुस्त्वयामितिजात्यैकवचनंमनवइत्यर्थः ॥ वस्तुतस्तुमनु स्त्वयमित्येकवचनेननवमाध्यायस्यमंत्रत्वंसूचितम् ॥ तदुक्तंबृहत्तारारहस्ये ॥ काम्यार्च्चन

मुपक्रम्य ॥ पठेत्सप्तशतींचंडीमेकांतेचसमाहितः ॥ अथवानवमाध्यायंकेवलंवापठेच्छिवइ ति ॥ अनेनैवज्ञापकेनतत्तद्देवतोपासकैस्तत्तदध्यायोवश्यंपठनीयइतिसिद्धम् ॥ अस्याध्या यस्यदेवतेभैरवीतारेबोध्ये ॥ तदुक्तम् ॥ देवताभैरवीताराशृणुगोप्यंवराननइति ॥ ३८ ॥ ३९ ॥ इतिकारिकामृतव्याख्यानेचषकाभिधेनवमोध्यायः ॥ ९ ॥

अथदशमाध्यायस्यश्लोकसंख्याआह ॥ सार्धसप्तान्वितैरिति ॥ सप्तविंशतिमंत्राइति ॥ ततसप्तविंशतिसंख्यकाःश्लोकरूपामंत्राः ॥ ततोंतिमइति ॥ ततस्तदनंतरंजज्वलुश्चाग्नय

सार्धसप्तान्वितैर्विंशश्लोकैस्तुदशमेपुनः ॥
सप्तविंशतिमंत्रास्तुश्लोकरूपास्ततोंतिमः ॥ ४० ॥

इत्यर्धश्लोकात्मकोमंत्रइत्यंतिमपदेनसूचितम् ॥ तदुक्तंगौडपादीयेकारिकामृते ॥ अर्धमं त्रोंतिमःप्रोक्तइत्यादि ॥ अत्रकेचित् ॥ सार्धद्वाविंशतिर्मंताइतिप्रतीकमुपादायततःप्रववृते युद्धमितिश्लोकास्त्रयोदश ॥ तत्रापिसानिराधारेत्यर्धश्लोकात्मकोमनुः ॥ नियुद्धंखेतदादैत्य इत्याद्यामनवोनवेत्यनेनस्वकल्पितपद्येनसार्धद्वाविंशतिमंत्राणांव्यवस्थांकृत्वाजज्वलुश्चाग्न

यइत्यर्धस्ययामलतंत्रगतत्वंस्वीकृत्यमंत्रसंख्यापूरणार्थंहताश्वःसतदादैत्यइत्यर्धात्पूर्वमश्वा श्वपातयामासेत्यर्धाधिकंस्वीकुर्वंतितदसत् ॥ तत्रपूर्णानांनिवेशोत्तरमेवार्धस्यनिवेशइतिन्या येनांत्यार्धस्यैवमंत्रत्वस्वीकारात् ॥ एकत्रनिर्णीतःशास्त्रार्थोऽसतिबाधकेऽन्यत्रापीतिन्याय विरोधाच्च ॥ किंच ॥ भवदभिमतंपरस्परानिराकांक्षत्वरूपंमंत्रत्वमापिनसंभवति ॥ तत्रापि सेत्यत्रकुत्रकेत्याकांक्षायांपूर्वश्लोकोक्तगगनेपिसादेवीतिशेषपूरणाभावेनिराकांक्षशाद्बबोधा भावात् ॥ अस्मन्मतेत्वनन्यगतिकत्वेनतत्रतत्रानुवृत्त्याध्याहारादिनावाक्यपूर्त्तिराश्रयणीयै वनतुतद्भियाऽमंत्रस्यमंत्रत्वस्वीकारः॥ वस्तुतस्तुभवदभिमतमंत्रलक्षणस्यात्रमंत्रसाधकत्वा भावादित्युक्तमेवसाविस्तरंपूर्वमस्माभिरिति ॥ यदापिजज्वलुरित्यर्धस्ययामलतंत्रगतत्वंस्वी कृतंतदापिनमनोरमम् ॥ अस्यार्धस्ययामलतंत्रेऽभावात् ॥ अनादिशिष्टाचारविरोधाच्च ॥ किं च ॥ नहियामलतंत्रेसत्वेपिसप्तशत्यांसत्वाभावज्ञापकंमानंपश्यामः ॥ किंच ॥ नागोजी भट्टकृतसप्तशतीटीकायांहताश्वःसतदादैत्यइत्यर्धात्पूर्वंचर्मचार्ककरामलमितिव्याख्यानेच र्मचेत्यत्रत्यचकारेणाश्वसारथ्योःसमुच्चयइतिकथनादइवांश्चेत्यर्धस्योपयोगाभावात् ॥ तस्मा

द्वहुषुप्राचीनपुस्तकेषुजज्वलुरित्यर्धस्यपाठसत्वेनाश्वांश्वेत्यस्याभावेनचप्रामाण्याभावात्॥अ
तएवप्रमाणमूर्धन्यैःश्रीमद्गौडपादाचार्यैःसप्तशतीभाष्येजज्वलुरित्यर्धस्यप्रतीकग्रहणंकृतामि
त्यलंबहुना ॥ ४० ॥

ऋष्युवाचद्वयमिति ॥ तत्राध्यायारंभेऋषिरुवाचेत्येकोमंत्रस्ततःपंचश्लोकानंतरंचापरः
एवमुवाचद्वयमित्यर्थः ॥ देव्युवाचद्वयमिति ॥ तत्रप्रथमश्लोकद्वयोत्तरंदेव्युवाचेतिमंत्रस्त

अर्धश्लोकात्मकोमंत्रोऋष्युवाचद्वयंतथा ॥
देव्युवाचद्वयंचैवद्वात्रिंशन्मंत्रसंग्रहः ॥ ४१ ॥
इतिकारिकामृतेदशमोध्यायः ॥ १० ॥



तःपुनःश्लोकद्वयानंतरंचदेव्युक्तिरित्येवंदेव्युवाचद्वयमित्यर्थः ॥ अस्मिन्नध्यायेसर्वेमंत्राःक
तिसंतीत्यतआह ॥ द्वात्रिंशदिति ॥ स्पष्टम् ॥ ४१ ॥
अस्याध्यायस्यशुंभमर्दिनीसरस्वतीदेवता ॥ तदुक्तंकात्यायनीतंत्रे ॥ दशमेसिंहमारूढाशू
लपाशविधारिणी ॥ मुख्याचतुर्भुजावाणचापहस्ताशुभेक्षणेति ॥ यामलेत्वष्टभुजात्वमुक्त

म्॥ सरस्वत्यष्टहस्तातुबाणंचमुसलंतथा ॥ शूलंचक्रंतथाशंखंघंटांवैलांगलंतथा ॥ धनुरेतानिदिव्यानिहस्तैर्देवीबिभार्त्तिसा ॥ श्वेतपर्वतसंकाशाश्वेतवस्त्राविभूषणा ॥ नानारत्नसमाकीर्णावेदविद्याविनोदिनी ॥ आषाढेनवरात्रेतुपूज्याशुंभनिबर्हिणीति ॥ इतिकारिकामृतव्याख्यानेचषकाभिधेदशमोध्यायः ॥ १० ॥

अथैकादशेध्यायेश्लोकसंख्याआह ॥ श्लोकानामिति ॥ अस्मिन्नध्यायेसार्धपंचाशच्छ्लो

श्लोकानांसार्धपंचाशज्ज्ञेयमेकादशेस्फुटम् ॥
पंचाशच्छ्लोकमंत्रास्तदंतेर्धश्लोकमंत्रकः ॥ ४२ ॥

काइत्यर्थः ॥ तत्रपंचाशच्छ्लोकरूपामंत्रास्तदंतेध्यायांतेतदातदावतीर्याहमित्यर्धश्लोकात्मकोमंत्रः ॥ तदेवाह ॥ पंचाशदिति ॥ सार्धास्त्रयःसार्धाश्चत्वारइत्यादौत्रिचतुर्णापरतएवार्धनिवेशस्यलोकसिद्धत्वादितिभावः ॥ अतएवकात्यायनीतंत्रेभगवताशिवेनसार्धाःसर्वाहुतिर्देविपंचाशत्पंचसंयुताइत्यनेनांत्यार्धस्यैवमंत्रत्वमुक्तम् ॥ गौडपादीयेकारिकामृतेप्यर्धमंत्रोंतिमःप्रोक्तइत्यादिनांत्यार्धस्यमंत्रत्वंस्पष्टमेवोक्तम् ॥ नचैवंमहामारीविनाशफलकामनयेत्थंय

दायदेतिश्लोकात्मकस्यप्रयोगउपलभ्यतेताद्विरोधइतिवाच्यम् ॥ अस्यश्लोकात्मकस्यमंत्रत्वं तुकेवलमंत्रजपएवनतुसप्तशतमंत्रविभागेमंत्रत्वामितिसविस्तरंज्ञानिनामपिचेतांसीतिमंत्र व्याख्यानेपूर्वमुक्तमितितत्रैवद्रष्टव्यमितिदिक् ॥ एतेनभास्कररायैःशाकंभरीतिविख्यातिंत दायास्याम्यहंभुवीत्यस्यार्धमंत्रत्वंगुप्तवत्यामुक्तंतस्मादर्त्तव्यमित्युक्तंभवतीति ॥ अमुमेवाश यंमनसिनिधायमूलेएकदेशिमतमाह ॥ शाकंभरीति ॥ ४३ ॥

शाकंभरीतिविख्यातिंतदायास्याम्यहंभुवि ॥
एषोर्धमंत्रइत्याहुःकेचिदत्रविचक्षणाः ॥ ४३ ॥



देवीद्वयमिति ॥ अस्मिन्नध्यायेदेव्युवाचेतिमंत्रद्वयामित्यर्थः ॥ तत्रप्रणतानांप्रसीदत्व मितिश्लोकानंतरंदेव्युवाचेत्येकोमंत्रस्ततःसर्वाबाधाप्रशमनामितिश्लोकानंतरमपरोदेव्युवाचे त्युवाचमंत्रइतिविवेकः ॥ ऋषिरिति ॥ अध्यायारंभेऋषिरुवाचेत्येकोमंत्रः ॥ देवाइति ॥ वरदाहंसुरगणाइतिश्लोकानंतरंदेवाऊचुरित्येकोमंत्रः ॥ तथाचत्वारउवाचमंत्राःपंचाशच्छ्लो कमंत्राः ॥ एकोर्धमंत्रइतिमिलित्वापंचपंचाशत्संख्यकाःसर्वेमंत्राभवंतीत्यतआह ॥ पंचा

धिकमिति ॥ स्पष्टम् ॥ अस्मिन्नध्यायेसर्वस्येत्याद्याःषोडशश्लोकानारायणीलिंगकाःकात्याय
नीतंत्रसंमताःसंतिक्कचित्सर्वतःपाणीपादांतेत्यादिद्वयंत्रयंवाधिकंपठंतितत्प्रकृततंत्रानुसारिभि
र्नोपादेयंनवशत्यांवातेषांनिवेशोस्त्विवतिबोध्यम् ॥ अस्याध्यायस्यदेवतावैष्णवीबोध्या ॥ तदु
क्तंकात्यायनीतंत्रे ॥ सार्धाःसर्वाहुतिर्देविपंचाशत्पचसंयुताः ॥ वैष्णवीदेवताचात्रमहागरुड
वाहनेति ॥ ४४ ॥ इतिकारिकामृतव्यख्यानेचषकाभिधेएकादशोध्यायः ॥ ११॥

देवीद्वयमृषिश्चैकोदेवाऊचुरितीरितः
पंचाधिकंतुपंचाशन्मंत्रावैतंत्रसंमताः ॥ ४४ ॥
इतिकारिकामृतेएकादशोध्यायः ॥ ११ ॥

अथद्वादशेध्यायेश्लोकसंख्याआह ॥ अष्टविंशदिति ॥ मंत्रसंख्याआह ॥ चत्वारिंशदि
ति ॥ एकलःएकः ॥ तेनैकचत्वारिंशत्संख्याजातेतिभावः ॥ तत्रेति ॥ तत्रदूरादेवपलायंते
स्मरतश्चरितंममेत्यर्धश्लोकात्मकोमंत्रएकः ॥इत्युक्तासाभगवतीत्यर्धश्लोकात्मकोमंत्रश्चापरए
वमर्धश्लोकात्मकमाहुतिद्वयमित्यर्थः ॥ तदुक्तंकात्यायनीतंत्रे ॥ दूरेत्यर्धेनसहिताअष्टाविंश

तिरूपकाइति ॥ तत्रैवचतुस्त्रिंशेपटले ॥ इत्युक्तेत्यर्धमंत्रोयंजपाच्छौर्यप्रदायकइति ॥ य
 तुसर्वंममैतन्माहात्म्यंममसन्निधिकारकमित्यर्धंतथानिशुंभेचमहावीर्येशेषाःपातालमाययुरि
 त्यर्धंचक्रमेणज्ञेयमितिगुप्तवत्यामुक्तंतदत्यंतोपहासास्पदम् ॥ दूरेत्यर्धेनसंहिताज्ञातिप्रत्यक्षव
चनविरोधात् ॥ किंच ॥ उवाचांतास्तुयेमंत्रास्तेर्धमंत्रात्मकाःप्रियइतिहरगौरीतंत्रविरोधा
च्च ॥ गौडपादीयेकारिकामृतेपि ॥ अष्टाविंशतिमंत्राःस्युरेकाप्यर्धाहुतिस्तथेत्यनेनाष्टाविंश

अष्टत्रिंशच्छ्लोकयुक्तेप्यध्यायेद्वादशात्मके ॥
चत्वारिंशच्चैकलश्चमंत्रास्तत्राहुतिद्वयम् ॥ ४५ ॥

तिमंत्रानंतरंदूरेत्यर्धस्यैवसत्वेनतस्यैवमंत्रत्वस्वीकाराच्च ॥ इत्युक्तेत्यर्धस्यमंत्रत्वंत्वर्धयुङ्नव
भिःश्लोकैरितिव्याख्यानेगुरुचरणैःकात्यायनीतंत्रप्रकाशिकायांस्पष्टमुक्तमितितत्रैवद्रष्टव्य
म् ॥ पुनर्ऋषिस्ततोर्धस्यादितिगौडपादीयेकारिकामृतेपीत्युक्तेत्यर्धस्यैवमंत्रत्वस्वीकाराच्चे
त्यन्यत्रविस्तरः ॥ ४५ ॥

अर्धश्लोकात्मकमितिपदमाहुतिद्वयमित्यत्रान्वेति ॥ श्लोकाइति ॥ अस्मिन्नध्यायेस

र्धश्लोकात्मकामंत्राः सप्तत्रिंशदित्यर्थः ॥ ऋषिरिति ॥ सार्धाष्टाविंशतिश्लोकानंतरंऋषिरु
वाचेत्येकोमंत्रः ॥ तथादेव्युक्तिरिति ॥ अध्यायारंभेदेव्युवाचेत्येकोमंत्रः ॥ मंत्रसंख्येति ॥
सप्तत्रिंशच्छ्लोकरूपामंत्राः ॥ अर्धात्मकौह्रीमंत्रौतथोवाचपदांकितौह्रीमंत्रौमिलित्वासर्वेमंत्रा
एकचत्वारिंशज्जाताइतिभावः ॥ तदुक्तंकात्यायनीतंत्रे ॥ एवंतुद्वादशेएकचत्वारिंशन्मिता
हुतिरिति ॥ अस्याध्यायस्यतुदेवतानुक्तत्वान्महासरस्वतीबोध्येति ॥ ४६ ॥ इतिकारि

अर्धश्लोकात्मकंश्लोकाःसप्तत्रिंशन्मिताऋषिः ॥
तथादेव्युक्तिरेकैवमंत्रसंख्यासमीरिता ॥ ४६ ॥
इतिकारिकामृतेद्वादशोध्यायः ॥ १२ ॥



कामृतव्याख्यानेघषकाभिधेद्वादशोध्यायः ॥ १२ ॥

अथत्रयोदशोध्यायेश्लोकसंख्याआह ॥ त्रयोदशइति ॥ स्पष्टम् ॥ ऋषिरुवाचेत्यारभ्ये
ति ॥ तत्राध्यायारंभेऋषिरुवाचेत्येकोमंत्रः ॥ एतत्तेकथितंभूपेत्यादित्रयःश्लोकात्मकामं
त्राः ॥ आराधितासैवेत्यर्धश्लोकात्मकएकोमंत्रः ॥ एवंचऋषिरुवाचेत्यारभ्यस्वर्गापवर्ग

दाइत्यंताःपंचमंत्रसंख्याबोध्या ॥ तदुक्तंकात्यायनीतंत्रे ॥ एतत्तेकथितंभूपेत्यादिसार्धत्रयंमनुरिति ॥ यत्तुऋषिरेतत्तइत्यर्धश्लोकोमंत्रस्ततस्त्रयइतिस्वकल्पितकारिकायामेतत्तइत्यर्धस्य मंत्रत्वमुक्तंतन्न ॥ सार्धास्त्रयःसार्धाश्चत्वारइतिवत्सार्धत्रयमित्यत्रापित्रयाणांपरतएवार्धनिवेशस्यलोकसिद्धत्वात् ॥ कात्यायनीतंत्रप्रकाशिकायामप्यंत्यार्धस्यैवमंत्रत्वस्वीकाराच्च ॥

त्रयोदशेसार्धसप्तदशश्लोकाःप्रकीर्त्तिताः ॥
ऋषिरुवाचेत्यारभ्यभोगस्वर्गापवर्गदा ॥ ४७ ॥
इत्यंताःपंचमंत्रास्तेमार्कंडेयस्ततःपरम् ॥
इतितस्यवचःश्रुत्वेत्यर्धमंत्रःप्रकीर्त्तितः ॥ ४८ ॥

किंच ॥ भवन्मतेउवाचांतास्तुयेमंत्रास्तेर्धमंत्रात्मकाःप्रियइतिहरगौरीतंत्राविरोधात् ॥ मार्कंडेयइति ॥ ततःपरंमार्कंडेयउवाचेत्येकोमंत्रः ॥ ४७ ॥

इतितस्येति ॥ इतितस्यवचःश्रुत्वेत्यर्धश्लोकात्मकोमंत्रः ॥ ४८ ॥

श्लोकमंत्राइति ॥ ततःप्रणिपत्येत्यारभ्ययतात्मनोरित्यंतायेपंचश्लोकास्तेश्लोकात्मकाए 

वमंत्राइत्यर्थः ॥ अथार्धेति ॥ अथानंतरंपरितुष्टेत्यर्धश्लोकात्मकोमंत्रः ॥ तदुक्तं ॥ कात्यायनीतंत्रे ॥ इतितस्यवचोदितः ॥ श्लोकषट्कंततोदेवीवाक्यंस्यात्परमेश्वरीति ॥ अत्रेदंबोध्यम् ॥ इतितस्यवचोदितःआदितइतिपदच्छेदः ॥ आर्षःप्रयोगः ॥ एवंचेतितस्येत्याद्यर्धप्रतीकग्रहणेनादितःप्रथमतोर्धश्लोकात्मकोमंत्रः ॥ ततःश्लोकषट्कंश्लोकशब्दोमंत्रपरस्तथाचप्रणिपत्येत्यादिपंचश्लोकात्मकामंत्राःपरितुष्टाजगद्धात्रीत्यर्धश्लोकात्मकोमंत्रइतिमंत्रषट्कमाद्य

श्लोकमंत्रास्ततोज्ञेयाःपंचवाथार्धपद्यकम् ॥
देव्युवाचेतिमंत्रोयंततःश्लोकस्तुमंत्रकः ॥ ४९ ॥

र्धेनसहसप्तमंत्राःसंपन्नाः ॥ यद्वा ॥ सार्धपंचसुश्लोकेषुश्लोकषट्कव्यवहारस्तुसार्धसप्तदशसृष्टीरुपदधातीतिन्यायेनबोध्यः ॥ अन्यत्पूर्ववत् ॥ इयमेवचरीतिःकात्यायनीतंत्रप्रकाशिकायांगुरुचरणैरुक्तेति ॥ ध्वनितंचेदंगौडपादाचार्यैःसप्तशतीभाष्ये ॥ गौडपादीयेकारिकामृतेप्येकादशार्धाहुतयइत्यादिनाषट्सुश्लोकेषुसप्तमंत्रत्वंबोधितमिति ॥ एतेनगुप्तवत्यामितितस्यवचोमुखमितिपाठमवलोक्यश्लोकषट्कंततोदेवीतिप्रतीकमुपादायेतितस्यवचइ

त्यादिकंश्लोकषट्कंश्लोकात्मकंमंत्रषट्कमितियथाश्रुतंभास्कररायैर्व्याख्यातंतन्नादर्त्तव्यम्॥
इतितस्यवचोमुखमितिपाठेपिअंत्यार्धस्यहरगौरीतंत्रोक्तपरिभाषयामंत्रत्वेसिद्धेआद्यार्धस्ये
तितस्यवचोमुखमितितस्येत्यर्धमादिंमंत्रंकृत्वोर्वरिताःपंचश्लोकात्मकामंत्राइतिसप्तमंत्रत्वंतु
तुल्यमेवेतिबोध्यम् ॥ देव्युवाचेतीति ॥ देव्युवाचेत्येकोमंत्रः ॥ ततःश्लोकस्तुमंत्रकइति ॥
तुशब्दोनिश्चयार्थकः ॥ ततःपरंयत्प्रार्थ्यतेत्वयाभूपेतिश्लोकात्मकएवमंत्रइत्यर्थः ॥ तदुक्तं
कात्यायनीतंत्रे ॥ यत्प्रार्थ्यतेत्वयाभूपश्लोकेनैकेनतोषकृदिति ॥ अत्रकात्यायनीतंत्रेप्रांचो
गौडाः ॥ यत्प्रार्थ्यतेत्वयाभूपनेमश्लोकेनतोषकृदितिपाठमवलोक्यनेमशब्दोह्यर्धपर्यायस्ते
नयत्प्रार्थ्यतेत्वयाभूपेत्येकस्मिन्नेवश्लोकेखंडद्वयंसंपादयंति ॥ तथायेपिमार्कंडेयउवाचेति
ततोवव्रेमनुत्रयमितिपाठमवलोक्यततोवव्रेनृपोराज्यमितिश्लोकद्वयेप्रथमार्धमध्यैकश्लोकां
तिमार्धात्मकंमंत्रत्रयंसंपादयंति ॥ तथादेव्युवाचपुनश्चैवस्वल्पश्लोकत्रयेणवै ॥ अर्धयोरेव
मंत्रत्वाद्भवंत्यत्रयुगाहुतिरितिपाठमवलोक्ययुगशब्दश्चतुःसंख्यावाचकइतिस्वल्पैरहोभिर्नृप
तइतिश्लोकत्रयेप्रथमार्धमध्यश्लोकद्वयांतिमार्धात्मकंमंत्रचतुष्टयंसंपादयंति ॥तत्रपाठद्वयेको

सौमुख्यः पाठइत्यत्रशिवएवशरणमिति ॥ यद्यप्येवंतथापिकात्यायनीतंत्रटीकायांप्रकाशिकासमाख्यायांगुप्तवत्यामन्यत्रचोक्तपाठादर्शनेनक्वचिदपिदाक्षिणात्यसंप्रदायेताद्दशमंत्रविभागादर्शनेनचोक्तपाठोऽप्रामाणिकइतिममप्रतिभाति ॥ ४९ ॥

मार्कंडेयइति ॥ ततोमार्कंडेयउवाचेत्येकोमंत्रः ॥ श्लोकमंत्रद्वयमिति ॥ ततोवव्रेनृपोराज्यमितिश्लोकात्मकंमंत्रद्वयमित्यर्थः ॥ ततोवव्रेमनुद्वयमितिकात्यानितंत्रोक्तेः ॥ ततोदेवीति॥

मार्कंडेयस्ततोमंत्रःश्लोकमंत्रद्वयंततः ॥
ततोदेवीषडर्धानिसप्तमंत्राःस्मृताबुधैः ॥ ५० ॥

ततोदेव्युवाचेत्येकोमंत्रः ॥ षडर्धानीति ॥ स्वल्पैरहोभिरित्यारभ्यतवज्ञानंभविष्यतीत्यंतायेत्रयःश्लोकाःसंतितत्रार्धात्मकाःषण्मंत्राः भवंतीत्यर्थःएतेषण्मंत्रादेव्युवाचेतिमिलित्वासप्तमंत्राजाताइत्यतआह ॥ सप्तमंत्राइति ॥ ५० ॥

मार्कंडयइति ॥ ततोमार्कंडेयउवाचेत्येकोमंत्रः ॥ पद्यद्वयइति ॥ तत्रेतिदत्वेत्यर्धश्लोकात्मकएकोमंत्रः ॥ बभूवांतर्हितासद्यइत्येकश्लोकात्मकोमंत्रः ॥ सूर्याज्जन्मसमासाद्येत्यर्ध

श्लोकात्मकएकोमंत्रः ॥ एवंचपद्यद्वयेमंत्रत्रयंसंपन्नमितिभावः ॥ तदुक्तंकात्यायनीतंत्रे ॥ इतिदत्त्वेत्यर्धमंत्रोवांछितार्थप्रपूरणइति ॥ ननुद्वौमंत्रौपुनरुच्चार्यसावर्णिर्भवितामनुरितिकात्यायनीतंत्रवचनेनेतिदत्त्वेतिश्लोकात्मकौद्वौमंत्रावुच्चार्यपुनः सावर्णिर्भवितामनुरित्यष्टाक्षरात्मकोन्यएकोमंत्रइतिभ्रमवारणायाह ॥ आवृत्त्येति ॥ अत्रमूलकृताशिवेनसावर्णिर्भवितामनुरितिचरमश्लोकस्यचरमावयवएवाधिकःपठितःसअमंत्रोभवतीतिशेषः॥ उत्तरत्रमंत्रांतरत्वा

मार्कंडेयस्ततःपद्यद्वयेमंत्रत्रयंस्मृतम् ॥

आवृत्त्यात्राधिकोऽमंत्रःसावर्णिर्भवितामनुः ॥ ५१ ॥

भावद्योतनायकंठरवेणपठितइतिभावः ॥ तथाचसंकर्षांतिमसूत्रम् ॥ विद्यतेवान्यकालत्वायथायाज्यासंप्रैषःयथायाज्यासंप्रैषइति ॥ ऋग्वेदब्राह्मणेपि ॥अन्होरूपमन्होरूपमिति ॥ऋग्विधानेपि ॥ नमःशौनकायनमःशौनकायेति ॥समाप्तंशास्त्रमितितुतदर्थः॥ अतएवद्वौमंत्रौपुनरुच्चार्येतिकात्यायनीतंत्रवचनव्याख्यानेइतिदत्त्वेत्यस्यार्धमंत्रत्वमुक्त्वाबभूवांतर्हितासद्यइतिश्लोकात्मकोमंत्रःसूर्याज्जन्मेत्यर्धात्मकोद्वितीयः तौद्वौमंत्रावुच्चार्येतिसावर्णिर्भवितामनु

रित्येकपादात्मकंग्रंथसमाप्तिबोधकंपठेन्नत्वस्याहुतिरितिप्रकाशिकायामुक्तंगुरुचरणैः॥५१॥

अस्मिन्नध्यायेसर्वेमंत्राःकतिसंतीत्यतआह ॥ एकोनात्रिंशदिति ॥पूर्वोक्तप्रकारेणद्वादश श्लोकात्मकाः एकादशार्धश्लोकात्मकाः षडुवाचमंत्रामिलित्वैकोनत्रिंशत्संख्याकाआहुतय इत्यर्थः ॥ यत्तुगुप्तवत्यांहोमंत्रौपुनरुच्चार्यैतिव्याख्यानेइतिदत्वेतिद्वौश्लोकौदंडकलितवत्पु नरुच्चार्यमंत्रद्वयवर्धनेनैकोनत्रिंशत्संख्यापूर्त्तिःसंपद्यतइत्युक्तंतन्न॥ आवृत्तिंविनैवोक्तरीत्यासं ख्यापूर्त्तेःसमर्थनात् ॥ किंच ॥आवृत्तिकरणेमानाभावात् ॥वक्ष्यमाणमालामंत्रार्णसंख्यावि

एकोनात्रिंशत्संख्याकामंत्राअत्रस्मृताबुधैः ॥

रोधाच्च ॥ किंच ॥ भवन्मतेमकारादिनुकारांतोमनुःपरमदुर्लभः ॥ सत्संप्रदायविधिनाज्ञा तव्योममवल्लभे ॥ अन्यथाविफलोमंत्रःसत्यंसत्यंमयोदितामितिकात्यायनीतंत्रवचनेनमार्क डेयउवाचेत्यारभ्यसूर्याज्जन्मसमासाद्यसावर्णिर्भवितामनुरित्यंतंयन्मंत्रत्वमुक्तंतन्नसंगच्छतेऽ स्मन्मतेतुस्वरसतःसंगच्छते ॥ अतएवभगवताशिवेनसप्तसप्तत्युत्तरचतुःशताधिकैकोनविंश तिसहस्रार्णात्मकोमालामंत्रःससत्संप्रदायविधिनैवज्ञातव्योनतुभाट्टतंत्रादिन्यायेनेत्युक्तम् ॥

तदुक्तंदुर्गाभक्तितरंगिण्यांकात्यायनीतंत्रे ॥ मुनिमुन्यब्ध्यंकचंद्रैःप्रोक्तंसप्तशतीस्तवम् ॥ नातःपरतरंकिंचिदधिकंभुवनत्रयइति ॥ तस्मान्मदुक्तार्थएवसाधीयानितिकृतमतयोमात्सर्यमुत्सार्यविदांकुर्वंतु ॥ एतेनास्मिन्नध्यायेचरमप्रतीकग्रहणेनचरमश्लोकस्यैवद्विरुच्चारणमितिकेषांचिद्योजनमप्यपास्तम् ॥ यदप्यस्मिन्नध्यायेनवैवार्धमंत्राइतिकेनाचिदुक्तंतदपिन ॥ एकादशार्धाहुतयोद्वादशश्लोकमंत्रकाः ॥ उवाचवचनैःषड्भिरेकोनत्रिंशदीरिताइतिगौडपादीयकारिकामृतविरोधात् ॥ एतेनार्धमंत्राःसप्तेत्यपिनिरस्तम् ॥ एतेनाधुनिकपुस्तकेषुयच्चित्याश्म्यएकादशार्धाहुतयोद्वादशश्लोकमंत्रकाः ॥ उवाचवचनैःषड्भिरेकोनत्रिंशदीरिताइत्याहुस्तत्रकात्यायनीतंत्रविरोधःस्पष्टएवेतिदिगित्यंतोग्रंथःपूर्वग्रंथविरोधेननिर्मूलइतिध्येयम् ॥ गौडपादीयकारिकामृतवचनस्यश्रुतितुल्यप्रमाणभूतत्वात् ॥ कात्यायनीतंत्रप्रकाशिकायामप्येकादशार्धाहुतेरेवसमर्थनात् ॥ किंच ॥ श्रीहर्षकृतमंत्रविभागगुच्छेपितथैवस्वीकारादितिसुधियोविभावयंतु ॥ अथात्रोवाचपदांकितानांमंत्राणांविचारःक्रियते ॥ तत्रप्रथमेध्यायेसावर्णिःसूर्यतनयोयोमनुरित्याद्युक्तिःकस्येत्याकांक्षायाःसत्वादाद्योमार्कंडेयउवाचेतिमंत्रोऽपेक्षि

तएवास्ति ॥ ततोवैश्यमेकंददर्शसइत्युत्तरंराजोक्तित्वेपिराजोवाचेत्यस्यानपेक्षा ॥ सपृष्टस्ते नेत्यनेनैवतदर्थस्यनिबद्धत्वादितिकेचित् ॥ अन्येतुसावर्णिरित्यारभ्यप्रश्रयावनतोनृपमित्यंतं भागुरिंप्रतिमार्कंडेयवाक्यमेवबोध्यम् ॥ सुरथवैश्यसंवादस्यभूतपूर्वत्वेनतत्कथानकमेवभा गुरिंप्रतिमार्कंडेयोवोचत् ॥ अतएवतेनराज्ञासवैश्यःपृष्टइतिकर्मणिप्रयोगस्वारस्यंतेनपृथक राजोवाचेत्यस्यानपेक्षेत्याहुः ॥ तथाप्रत्युवाचसतंवैश्यःप्रश्रयावनतोनृपमित्यनेनगतार्थत्वा त्पुनर्वैश्यउवाचेतिमंत्रोनापेक्षितस्तथापिपूर्वोक्तकात्यायनीतंत्रवचनबलादस्त्येव॥ एवंचचतु र्भिरभ्रिमादत्तइतिविहितमंत्रेषुद्वितीयादिमंत्रार्थबोधस्येवेत्याकर्ण्येतिश्लोकमंत्रार्थदशायांवु द्धस्यार्थस्यपुनर्बोधस्यादृष्टार्थतावावाच्येतियथाकथंचित्समाधेयम् ॥ ततोदुर्वृत्ताःकिन्नुमे सुताइत्यनंतरंराजोवाचेत्युवाचमंत्रःसोपेक्षितएवास्ति ॥ ततोनुबध्नातिमानसमित्युत्तरंवै श्यउवाचेतिमंत्रोपेक्षितएव ॥ ततस्तेष्वप्रीतिषुनिष्ठुरामित्युत्तरंमार्कंडेयोक्तिः ॥ ततोवैश्यपा र्थिवावित्युत्तरंराजवाक्यम् ॥ ततोविवेकांधस्यमूढतेत्युत्तरंऋष्युक्तिः ॥ ततःसर्वेश्वरेश्वरीत्य नंतरंराजोवाचेत्यपेक्षितमेवास्ति ॥ ततस्त्वत्तोब्रह्मविदांवरेत्युत्तरंऋषिरुवाचेति ॥ ततोऽतुलां

तेजसःप्रभुरित्यनंतरंब्रह्मोवाचेतिमंत्रस्यनातीवापेक्षातुष्टावयोगनिद्रांतामित्यनेनगतार्थत्वा
त्तथापिअथब्रह्मोवाचततस्त्वंस्वाहात्वंस्वधादिमाइतिवचनेनानपेक्षितोप्यस्त्येवेति ॥ ततोहं
तुमेतौमहासुराविद्युत्तरंऋषिरुवाचेत्यपेक्षितमेव ॥ ततोव्रियतामितिकेशवमित्युत्तरंभगवदु
क्तिःसापेक्षितैव ॥ तथैतावाद्विद्वतंममेत्यनंतरंऋषिरुवाचेतिमंत्रोपेक्षितएव ॥ ततआवांजही
त्यर्धारंभेमधुकैटभावूचतुरित्यपेक्षितमापिकैश्चित्पठ्यमानमपिताभ्यांगदितइत्यनेनगतार्थत्वा
त्तंत्रविरोधाच्चनास्ति ॥ ततःसलिलेनपरिप्लुतेत्युत्तरंऋषिवाक्यमतीवसंनिहितत्वेनानपेक्षितम
पिऋष्युक्तिश्चतथेत्युक्त्वेत्यादिमंत्रद्वयंभवेदितिवचनबलादस्त्येव ॥ यामलपाठेत्वयंमंत्रोना
स्त्येवेतिविशेषः ॥ इतिप्रथमोध्यायः ॥ ततोद्वितीयेध्यायेदेवासुरमभूद्युद्धमित्याद्युक्तिःक
स्येत्याकांक्षायाःसत्वादृषिरुवाचेतिमंत्रोपेक्षितएवास्ति ॥ नचपूर्वाध्यायांत्यश्लोकांतमृष्यु
क्तेरनुवृत्तिसत्वेनपुनरेतदध्यायारंभेऋषिरुवाचेत्युक्तिर्मुधैवेतिवाच्यम् ॥ अध्यायसमाप्तिबोध
कवाक्यानांव्यवधानात्तत्रतत्राध्यायारंभेसूताद्युक्तिरिवात्रापिऋष्युक्तेरावश्यकत्वात् ॥ मंडू
कप्लुत्यानुवृत्तौप्रमाणाभावात् ॥ ततःसूर्येंद्राग्न्यनिलेंदूनामितिश्लोकारंभेकैश्चित्पठ्यमानंदे 

वाऊचुरित्यनपेक्षितत्वादेवनास्ति ॥ त्रिदशाःकथयामासुरित्यनेनैवगतार्थत्वात्प्रकृततंत्रवि
रोधाच्च ॥ ततइत्थंनिशम्येतिश्लोकारंभेऋषिरुवाचेत्यपेक्षितमपिकात्यायनीतंत्रविरोधादेवना
स्ति ॥ तंत्रांतरेतुऋषिरुवाचेतिपठ्यतएवेति ॥ तथाचात्रवचनबलाद्देववाक्यव्यवधानेपिमंडू
कस्तुत्याध्यायसमाप्तिपर्यंतमृषिवाक्यानुवृत्तिरन्यत्ररुपष्टम् ॥ इतिद्वितीयोध्यायः ॥ अथतृ
तीयाध्यायरंभेऋषिरुवाचेत्यपेक्षिवएवास्ति ॥ ततउवाचतंमदोद्धूतमुखरागाकुलाक्षरमित्यने
नगतार्थत्वादनपेक्षितापितदंतेदेव्युक्तिरस्त्येव ॥ देव्युवाचेतिमंत्रांतेमंत्रश्लोकस्ततःपरामिति
कात्यायनीतंत्रोक्तेः ॥ ततोगर्जैष्यंत्याशुदेवताइत्यनंतरंऋषिरुवाचेत्यपेक्षितमेवास्ति ॥ इ
तितृतीयोध्यायः ॥ अथचतुर्थाध्यायारंभेपिसमाप्तिबोधकवाक्यव्यवधानादेवऋषिवाक्य
स्यानुवृत्त्यभावेनऋषिरुवाचेत्यपेक्षितमेवास्ति ॥ ततःशक्रादयःसुरगणाइतिश्लोकानंतरंदे
वाऊचुरितिकैश्चित्पठ्यमानमपिशक्रादयइत्यनेनगतार्थत्वात्तंत्रेनुक्तत्वाच्चानपेक्षितमेवाना
स्ति ॥ ततस्तैरस्मान्रक्षसर्वतइत्युत्तरंदेवकृतस्तवेनव्यवधानादृषिरुवाचेत्यपेक्षितमेवास्ति ॥
ततःप्रणतान्सुरानित्युत्तरंदेव्युवाचेरित्यपेक्षितमेवास्ति ॥ ततोव्रियतामित्यर्धोत्तरंदेवाऊचुरि

त्यपेक्षितमेवास्ति ॥ ततःसर्वदाबिकेइत्युत्तरंदेवदेवीवाक्येनव्यवधानात्पुनर्ऋषिरुवाचेत्यपे
क्षितमेवास्ति ॥ इतिचतुर्थोध्यायः ॥ ततःपंचमाध्यायारंभेउक्तरीत्यैवऋषिरुवाचेत्यपेक्षि
तमेव ॥ ततइतिकृत्वामतिंदेवाइतिश्लोकोत्तरंदेवाऊचुरित्यपेक्षितमेवास्ति ॥ अत्रयद्यपिदेवा
हिमवंतंनगेश्वरम्॥जग्मुस्तत्रचगत्वाविष्णुमायांतुष्टुवुरित्यनेनदेवाएवतुष्टुवुरितिनिराकांक्ष
शाब्दबोधेनपुनर्देवाऊचुरित्यनपेक्षितंतथापिदेवाऊचुस्ततःपरम् ॥नमोदेव्यादितःश्लोकाइति
कात्यायनीतंत्रवचनप्रामाण्यादनपेक्षितमपिस्वीकर्त्तव्यमेवेत्यन्यत्रविस्तरः ॥ ततोविनम्रमू
र्त्तिभिरित्यनंतरंऋषिरुवाचेत्यपेक्षितमेवास्ति ॥ ततःकौशिकीवाक्योत्तरंतत्पदनिर्वचनारंभे
ऋषिरुवाचेत्यपेक्षितमपिसमीपेतस्यसत्वान्नोक्तंमंडूकप्लुत्यानुवृत्तिसिद्धेः ॥ ततस्त्वयाकस्मा
न्नगृह्यतइत्युत्तरंऋषिरुवाचेत्यपेक्षितमेवास्ति ॥ अत्रकेचित् ॥ निशम्येतिश्लोकानंतरंशुंभ
उवाचतथेतिचेतिचवक्तव्येतिश्लोकोत्तरंपुनरपिऋषिरुवाचेत्यपेक्षितमित्याहुस्तन्न ॥ निश
म्येतिश्लोकेउक्त्वाप्रेषयामासेतिशेषपूरणेनोवाचद्वयस्योपयोगाभावात् ॥ ततोत्तरश्लोकार्थः
कर्म ॥ तथाचसशुंभःचंडमुंडयोर्वचःनिशम्यममवचनात्सायत्रास्तेतत्रगत्वेतिचेतिचसामदा

माद्युपायेनसावक्तव्याचपुनः लघुक्षिप्रंसंप्रीत्यायथाभ्योतितथाकार्यमितिसुग्रीवनामकंदूतंप्र
त्युक्त्वाप्रेषयामासेतिवाक्यार्थः ॥ तेनकात्यायन्यादितंत्रेषूवाचद्वयस्याभावादप्रमाणमेव ॥
ततःश्लक्ष्णंमधुरयागिरेत्युत्तरंदूतउवाचेत्यपेक्षितमेवास्ति ॥ ततोमत्परिग्रहतांव्रजेत्युत्तरंऋ
ष्युक्तिरप्यपेक्षितैवास्ति ॥ ततोययेदंधार्यतेजगदित्युत्तरंदेवीवागप्यपेक्षितैवास्ति ॥ ततः
पाणिंगृह्णातुमेलघ्वित्युत्तरंदूतवागपितथैव ॥ ततोगौरवामागमिष्यसीत्यनंतरंपुनरपिदे
व्युक्तिस्तथैव ॥ एवंचास्मिन्नध्यायेनवैवोवाचमंत्राइतिभावः ॥ इतिपंचमोध्यायः ॥
अथषष्ठाध्यायारंभेपूर्ववदृष्युक्तिरपेक्षितैवास्ति ॥ ततोयक्षोगंधर्वएववेत्युत्तरंऋषिरुवाचे
त्यपेक्षितमेवास्ति ॥ ऋष्युवाचद्वययोर्मध्येदैत्यवाक्येनव्यवधानात् ॥ ततःकेशाकर्षणवि
ह्वलामित्युत्तरंदेव्युवाचेत्यपेक्षितमेवास्ति ॥ ततःकिंतेकरोम्यहमित्युत्तरंऋष्युक्तिरप्यपेक्षि
तैवास्ति ॥ एवंचात्रचत्वारउवाचमंत्राःसंतीतिध्येयम् ॥ इतिषष्ठोध्यायः ॥ अथसप्तमा
ध्यायारंभेपूर्ववदेवऋष्युक्तिरपेक्षितैवास्ति ॥ ततोनिशुंभंचहनिष्यसीत्युत्तरंऋष्युक्तिरप्यपे
क्षितैवास्ति ॥ इतिसप्तमोध्यायः ॥ अथाष्टमाध्यायारंभेपूर्ववदेवऋषिरुवाचेत्यपेक्षितमेवा

स्ति ॥ अष्टमएकएवोवाचमंत्रोनत्वन्यइतिभावः ॥ तेनभक्ष्यमाणाइत्यर्धोत्तरंऋषिरुवाचे तितंत्रांतरोक्तमपिकात्यायनीतंत्रेऽनुक्तत्वान्नास्तीतिमंडूकप्लुत्यैवानुवृत्तिः स्वीकार्येत्युक्तंभव तीति ॥ इत्यष्टमोध्यायः ॥ अथनवमाध्यायारंभेराजोवाचेत्यपेक्षितमेवास्ति ॥ ततो निशुंभश्चातिकोपनइत्युत्तरंऋषिरुवाचेत्यपेक्षितमेवास्ति ॥ एवंचास्मिन्नध्यायेउवाचमंत्र द्वयमेवेति ॥ नवमोध्यायः ॥ दशमाध्यायारंभेपूर्ववदेवऋष्युक्तिरपेक्षितैवास्ति ॥ ततोयुध्यस्व चातिमानिनीत्यनंतरंदेवीवागप्यपेक्षितैवास्ति ॥ ततएकैवाहमितिश्लोकानंतरंतंत्रांतरसंमतं केश्चित्पठ्यमानमपिप्रकृततंत्रेऽभावादृषिरुवाचेत्यपेक्षितमपिनास्ति ॥ ततस्तस्यादेव्यास्त नौजग्मुरित्यर्धानंतरंदेव्युवाचेत्यनपेक्षितमपिवचनबलादस्त्येवेति ॥ ततस्तिष्ठाम्याजौस्थि रोभवेत्युत्तरंऋषिरुवाचेत्यपेक्षितमेवास्ति ॥ इतिदशमोध्यायः ॥ ततएकादशाध्यायारंभेपू र्ववदेवऋषिरुवाचेत्यपेक्षितमेवास्ति ॥ ततोदेव्याहतेतत्रमहासुरेंद्रइतिश्लोकानंतरंदेवाऊचु रित्यपेक्षितमपिप्रकृततंत्रेऽभावान्नास्त्येव ॥ सेंद्राःसुराइत्यनेनैवगतार्थत्वान्नातीवापेक्षेतिब हवः ॥ ततोलोकानांवरदाभवेत्यनंतरंदेव्युवाचेत्यपेक्षितमेवास्ति ॥ ततोजगतामुरपकारक ३१

मित्युत्तरंदेवाऊचुरित्यपेक्षितमेवास्ति ॥ ततोऽस्मद्धैरिविनाशनामित्यनंतरंदेव्युवाचेत्यपेक्षितमेवास्ति ॥ एवंचचत्वारएवोवाचमंत्राःसंति ॥ इत्येकादशोध्यायः ॥ अथद्वादशाध्यायारंभेपूर्ववद्देव्युवाचेत्यपेक्षितमेवास्ति ॥ ततोदूरेत्यर्धश्लोकमंत्रानंतरंऋषिरुवाचेत्यपेक्षितमेवास्ति ॥ एवंचात्रद्वावेवोवाचमंत्रावस्मिन्नध्यायेइतिभावः ॥ इतिद्वादशोध्यायः ॥ अथत्रयोदशाध्यायारंभेपूर्ववदेवऋषिरुवाचेत्यपेक्षितमेवास्ति ॥ ततोभोगस्वर्गापवर्गंदेत्यनंतरंमार्कंडेयउवाचेत्यपेक्षितमेवास्ति ॥ ततःप्रत्यक्षंप्राहचंडिकेत्युत्तरंदेव्युवाचेत्यपेक्षितमेवास्ति ॥ ततःपरितुष्टाददामितदित्यर्धमंत्रानंतरंमार्कंडेयउवाचेत्यपेक्षितमेवास्ति ॥ ततःसंगविच्युतिकारकमित्यनंतरंदेव्युवाचेत्यपेक्षितमेवास्ति ॥ ततस्तवज्ञानंभविष्यतीत्यनंतरंमार्कंडेयउवाचेत्यपेक्षितमेवास्तीतिषडुवाचमंत्रायथास्थानंसंत्येवेति ॥ अयंचोवाचपदांकितानांमंत्राणांनिर्णयः प्राचीनैर्वर्णितप्रायएवतथापिबालानांसुखबोधायसम्यक्परिष्कृष्योक्तइतिध्येयम् ॥ एवंचसप्तशत्यांसर्वेउवाचपदांकितामंत्राःकात्यायनीतंत्रमतेसप्तपंचाशत् ॥ तत्संग्रहश्लोकोगुप्तवत्याम् ॥ ब्रह्माभगवान्दूतोवैश्योदेवोनृपोमृकंडुसुतः ॥ देव्यृषयश्चैकैकद्विद्वि

त्रिचतुःशरार्कऋक्षमिताः॥इतिसप्ताधिकपंचाशदुवाचपदांकितामंत्राइति॥ त्रयोदशोध्यायः ॥ अथोसमुदितासंख्यावक्ष्यतेचंडिकामनोः ॥श्लोकमंत्रोर्द्धिपान्मंत्रस्तथोवाचपदांकितः ॥ नवार्णमंत्रोवेदार्णोगजार्णःषड्विधोमनुः ॥ श्लोकपिंडोध्यायपिंडोमंत्रपिंडइतित्रिधा॥ इत्यं कधामार्गणश्चरविःसोमःखरःखरः ॥ रेखाचैवतुदुःसीमालोकउन्नसइत्यपि ॥ कात्यायनीतं त्रमतेक्रमात्संख्याविचक्षणैः ॥ बोध्येतिशेषः ॥ एतेनश्लोकमंत्रस्त्रिपान्मंत्रःपुनरुक्तोर्धमंत्रकः ॥ उवाचांकितइत्येवंमंत्रःप्रोक्तोत्रपंचधा ॥ मंत्रपिंडःश्लोकपिंडोध्यायपिंडइतित्रिधा

इत्येवंकीर्त्तितोमंत्रविभागश्चंडिकामनोः ॥ ५२ ॥

इत्यष्टौसुगमस्तोषःश्रीजलंसोमउन्नसः ॥ दुस्थेमालोकइत्याख्याःसंख्यास्तंत्रेत्रवर्णिताइ तिगुप्तवत्यामुक्तंतन्निर्मूलम् ॥ सप्तशत्यांत्रिपान्मंत्रपुनरुक्तमंत्रयोरभावात् ॥ गुप्तवत्युक्तप्र कारेणतत्स्वीकारेतुकात्यायन्यादितंत्रविरोधइतिपूर्वमेवोक्तमस्माभिरितिदिक् ॥ ग्रंथमुपसं हरति ॥ इत्येवमिति ॥ मयानागोजिभट्टेनकात्यायनतिंत्रमतंसम्यक्साधकबाधकोपन्या सादिभिर्विलोक्यज्ञात्वाचकारान्नकेवलंस्वपांडित्येनाकिंतुगुरुपारंपर्यक्रमेणज्ञात्वैवंपूर्वोक्तप्र

कारेणचंडिकामनोःसप्तशत्याख्यमालामंत्रस्यसर्वाशापरिपूरकस्यसप्तशतमंत्रविभागःकीर्त्तितःकथितइत्यन्वयः ॥ तत्रचंडीनामपरब्रह्मणःपट्टमहिषीदेवता ॥ यद्भयाद्वातिवातोयंसूर्योभीत्याचगच्छति ॥ इंद्राग्निमृत्यवस्तद्वत्सादेवीचंडिकास्मृतेतिभुवनेश्वरीसंहितोक्तेश्चंडभानुश्चंडवातइत्यादौभयजनकेचंडपदस्यप्रयोगाच्च ॥ भयजनककोपार्थकचडिकोपइतिधातोःपचाद्यचिगौरादित्वान्ङीषिकृतेचंडीतिपदनिष्पत्तिः ॥ अतएवकस्यबिभ्यंतिदेवाश्चजातरोष

कात्यायनीतंत्रमतंमयासम्यग्विलोक्यच ॥

इतिश्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचितंकारिकामृतंसमाप्तम् ॥



स्यसंयुगइत्यादिनाप्रसादोनिष्फलोयस्यकोपोपिचनिरर्थकः ॥ नतंभर्त्तारमिच्छंतिषंढंपतिमिवस्त्रियइत्यादिनाचमहाभयजनकत्वेनैवकोपस्यसाफल्योक्तेः॥ तद्दशादेवनमस्तेरुद्रमन्यवइत्यादिनाप्रथमंमन्यवएवनमस्कारदर्शनाद्भीषास्माद्वातः पवतेभीषोदेतिसूर्यः भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइत्यादिश्रुत्यावाय्वादिभयजनककोपस्यापिपरब्रह्मलिंगत्वमक्षतमेव ॥ अतएवमहद्भयंवज्रमुद्यतमितिश्रुतौवज्रपदेनब्रह्मैवोच्यतेनायुधविशेषोभयजनकत्वालिं

गादित्युत्तरमीमांसायांकंपनादित्यधिकरणे ॥ तत्स्वरूपंचोक्तंरत्नत्रयपरीक्षायामप्पय्यदीक्षि
 तैः ॥ नित्यंनिर्दोषगंधंनिरतिशयसुखंब्रह्मचैतन्यमेकंधर्मोधर्मीतिभेदद्वयमयातिपृथग्भूयमाया
 वशेन ॥ धर्मस्तत्रानुभूतिःसकलविषयिणीसर्वकार्यानुकूलाशक्तिश्चेच्छादिरूपोभवतिगुणग
णश्चाश्रयस्यैकएव॥ कर्तृत्वंतत्रधर्मीकलयतिजगतांपंचकेसृष्टिपूर्वेधर्मःपुंरूपमाप्त्वासकलज
गदुपादानभावंबिभर्त्ति ॥ स्त्रीरूपंप्राप्यदिव्याभवतिचमहिषीस्वाश्रयस्यादिकर्त्तुःप्रोक्तौधर्म
प्रभेदावपिनिगमविदांधर्मिवद्ब्रह्मकोटीति ॥ अस्यार्थः ॥ नित्यंकालत्रयाबाध्यंदोषगंधेना
पिरहितंनिरतिशयसुखात्मकमद्वितीयमेकंब्रह्मचैतन्यंमाययाकल्पितभेदंसद्धर्मधर्मिभावमय
तिप्राप्नोति ॥ जीवब्रह्मविभागवदनादिरयंधर्मधर्मिविभागः ॥ तत्रधर्मःस्वमात्रप्रकाशरूप
स्यधर्मिणःपरब्रह्मणःसकलप्रपंचविषयानुभूतिर्भवति ॥ तदुक्तंकूर्मपुराणेशिवेनैव ॥ तयाहं
संगतोदेव्याकेवलोनिष्कलःपरः ॥ पश्याम्यशेषमेवेदंयस्तद्वेदसमुच्यतइति ॥ सएवधर्मः
सकलकार्यानुकूलाशक्तिःसर्वोपिगुणगणश्चभवति ॥ तदुक्तंश्वेताश्वतरोपनिषदि ॥ परास्य
शक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेति ॥ अस्यशक्तिःस्वाभाविकीस्वभावि 

भागप्राप्ताज्ञानरूपाबलरूपाकृतिरूपाचकारादिच्छारूपाचेत्यर्थः ॥बलंनामप्रयत्नमनपेक्ष्यांगुल्यग्रादिनापिमहापर्वतादिधारणानुकूलोव्यापारः ॥ धर्मःज्ञानरूपाशक्तिःसैवधर्मिणःसकलगुणगणाद्यात्मिकाचेति ॥ अतएवाभियुक्ताआहुः ॥ शक्तिशरीरमधिदैवतमंतरात्माज्ञानंक्रियाकरणमासनजालमिच्छा ॥ ऐश्वर्यमायतनमावरणानिचत्वंकिंकिंनयद्भवसिदेविशशांकमौलेरिति ॥ तत्रसृष्टिपूर्वेपंचकेसृष्टिपालनसंहारा[1]तिरोधानानुग्रहरूपेषुविश्वस्यसृष्ट्यादिषुधर्मीकेवलंकर्त्ताभवति ॥ धर्मस्तुपुरुषवनितादिरूपेणविभागंप्राप्यपुरुषरूपेणोपादानंभवतिवनितारूपेणदिव्यमहिषीभवति ॥ तेचपुरुषवनितेनास्मदादिवज्जीवकोटीकिंतुब्रह्मकोटीतिवेदाविदांसिद्धांतः॥ एवंचैकमेवब्रह्मानादिसिद्धयामाययाधर्मीधर्मश्चेतिद्विविधमभूत्ततःसृष्ट्यारंभेयत्प्राथमिकमीक्षणंतदैक्षतबहुस्यांप्रजायेयेतिसोकामयततत्तपोकुरुतेइत्यादित्रिविधश्रुतिसिद्धज्ञानेच्छाक्रियासमष्ट्यात्मकंसएवधर्मः ॥ सचधर्म्यभिन्नएवतस्यैवधर्मत्वाच्छक्तिरितिसंज्ञा ॥ अतएवाथातोधर्मजिज्ञासेतिकौलोपनिषत्प्रथमसूत्रेजैमिनीयसूत्रइवनधर्मशब्दोजडपरोऽपितुब्रह्मधर्मरूपाश्चिच्छक्तिपरएवेत्युक्तंभास्कररायैः ॥ किंच ॥ चितिःस्वतंत्राविश्वसि



---

१ बंधमोक्षौ

द्विहेंतुरित्यादिशाक्तिसूत्रैः शक्तेः परब्रह्मत्वमेवप्रतिपादितम् ॥ तथाचेदृशेक्षणाद्यात्मकचंडीचि
दादिनामकसमष्टिव्यक्तिरूपधर्मात्मकशुद्धब्रह्माभिन्नानांज्ञानेच्छाक्रियाणांत्रिसृणांव्यष्टीनांम
हासरस्वतीमहाकालीमहालक्ष्मीरितिप्रवृत्तिनिमित्तवैलक्षण्येननामरूपांतराणितादृशनामरू
पविशिष्टदेवतात्रयसमष्टित्वंप्रवृत्तिनिमित्तीकृत्यधर्मेचंडिकेतिव्यवहारः ॥ अस्याएवनामांत
रंमहालक्ष्मीस्तुरीयेतिस्पष्टंतंत्रविदाम् ॥ इयंसप्तशत्याख्यमालामंत्रस्यदेवतासमष्ट्यात्मि
कामुख्येतिसप्तशतीरहस्यव्याख्यानेउपपादितंगुरुचरणैः ॥ आचार्यभगवत्पादैरपिसौंदर्यल
हर्यांपरब्रह्माभिन्नत्वमेवभगवत्याउक्तम् ॥ गिरामाहुर्देवींद्रुहिणगृहिणीमागमविदोहरेःपत्नीं
पद्मांहरसहचरीमाद्रितनयाम् ॥ तुरीयाकापित्वंदुरधिगमनिःसीममहिमामहामायेविश्वंभ्रमय
सिपरब्रह्ममहिषीति ॥ देवीभागवतेपि ॥ सगुणानिर्गुणाचेतिद्विधाप्रोक्तामनीषिभिः ॥ स
गुणारागिभिःसेव्यानिर्गुणातुविरागिभिरित्यादीनिबहूनिवचनानिद्रष्टव्यानिविस्तरभीतेर्नो
च्यतेविस्तरस्तुशक्तितत्वविमर्शिन्यामस्मत्कृतदुर्गामहोदधौचद्रष्टव्यः ॥ एतेनमायावादमस
च्छास्त्रंप्रच्छन्नंबौद्धमुच्यते ॥ मयैवविहितंदेविकलौब्राह्मणरूपिणेतिश्लोकोवैष्णवादिभिर

विश्वास्यएवेतिबोध्यम् ॥ यद्यस्मिन्श्लोकेवैष्णवानांविश्वासेतुमायःपीतांबरेसुरइतिविष्णुवा
चकमायशब्दस्यावादशब्देनसमासेवैष्णवोत्क्षिप्तपाषाणस्यवैष्णवशिरस्येवप्रपातोजातइति ॥
ब्राह्मणरूपिणेत्यत्रब्राह्मणैरूपयतिनिरूपयतीत्यर्थेण्यंताण्णिचिणिनौतृतीया ॥ नतुब्राह्मण
स्यरूपंब्राह्मणरूपंततोमत्वर्थीयः ॥ कर्मधारयान्मत्वर्थीयनिषेधात् ॥ तत्रकर्मधारयप
देनतत्पुरुषमात्रस्यग्रहणात् ॥ यद्वा ॥ स्यान्मायाशांबरीक्षपा ॥ दंभोबुद्धिश्चेतिहेमचंद्रको
शाद्दंभोमायाशब्देनग्राह्यः ॥ तथाचदंभवादोवल्लभादिसंप्रदायमतेप्रसिद्धएवेतिवैष्णवमतनिं
दापरोयंश्लोकइतिसद्भिर्विचारणीयमितिसंक्षेपः ॥ विस्तरस्तुविद्वन्मंडनखंडनेसहस्राक्षाभि
धेग्रंथेसदानंदगिरियतींद्रैरुक्तोऽनुसंधेयः ॥ वेदांतेषुमायायामिथ्यात्वप्रतिपादनंत्वविद्याया
मिथ्यात्वप्रतिपादनंनतुविद्यायाः ॥ विद्यायानित्यत्वमविनाशित्वंतुबृहदारण्यकेनहिद्रष्टुर्दृष्टे
र्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तियतोन्यद्विभक्तंयत्पश्येदित्यादिनोक्तमनु
संधेयमितिदिगित्यलंप्रासांगिकेनेतिशिवम् ॥ इतित्रयोदशोध्यायः ॥ १३ ॥ विद्यातुसप्तशत्या
ख्याचतुर्वर्गफलप्रदा ॥ कलौनान्यागतिर्नान्यागतिर्नान्यागतिःशिवे ॥ १ ॥ एवंतन्त्रागमे

घंटाघोषंश्रुत्वातुसऽज्जनैः॥ विद्वद्वर्योहिनागेशःशिभट्टसुतस्तदा ॥ २ ॥ संप्रार्थितोहिबहुधा
 ततोव्याख्यांसुनिर्मलाम्॥ कृत्वातुसप्तशत्याश्चतथैवसराणिःकृता ॥ ३ ॥ ततःसार्धद्विपंचाश
 त्संख्यश्लोकैस्तुभूषितम्॥होमाद्यर्थतुतंत्राब्धेःकारिकामृतमुद्धृतम्॥४ ॥ ततःकतिपयैर्वर्षैरमृतं
तद्विषोपमम् ॥लवणेनान्वितंदुग्धंविषवत्स्यात्तथैवच ॥ ५ ॥ इदमप्यमृतंजातमज्ञानलवणा
न्वितम्॥ अतःसंप्रार्थितोहंवैश्रीमद्विजयशंकरैः ॥ ६ ॥ कोसौविजयशंकरइत्यपेक्षायामाह
॥ श्रीमत्सौराष्ट्रदेशेतुजामाख्यनगरंशुभम् ॥ तदीशोजामनृपतिःसत्यवादीजितेंद्रियः ॥ ७
॥ दाताकर्णसमःशूरःप्रजापालनतत्परः ॥ तत्राज्येऽचलजीत्येतन्नाम्नाख्यातोहिनागरः ॥ ८
॥ द्विजःषट्कर्मनिरतःशिवाराधनतत्परः ॥ ९ ॥ तत्सुतोपिमहाशैवःश्रीमद्विजयशंकरः ॥ य
द्दर्शनेनविबुधाःशिवांशइतिमेनिरे ॥ शैवसिद्धांतवेत्तावैश्रीशिवाराधनोत्सुकः ॥ १० ॥ आयु
र्वेदेतिनिपुणोधन्वंतरिरिवापरः ॥ दयागांभीर्यचातुर्योदार्यादिगुणसंयुतः ॥ ११ ॥ योगशा
स्त्रस्यमर्मज्ञस्तत्क्रियाकुशलःखलु ॥ मंत्रशास्त्रस्यतत्वज्ञस्तत्क्रियाकरणक्षमः ॥ १२ ॥ रा
जकार्यकरःश्रीमान्पुत्रपौत्राद्यलंकृतः ॥ बावाभाईतिनाम्नाचविख्यातोधरणीतले ॥ १३ ॥ 

यतःसंप्रार्थितोहंवैद्वित्रिवारंपुनःपुनः ॥ अतःपीयूषपानार्थंदोषशुद्धिकरंपरम् ॥ १४ ॥ बाल
कृष्णतनूजेनश्रीलक्ष्मीतनयेनच ॥ रमानाथेनविदुषाकारिकामृतटिप्पणम् ॥ १५ ॥ चष
काख्यंतुरचितंविद्वदानंदवर्धनम् ॥ तेनतुष्यतुसादेवीबालांबात्रिपुरेश्वरी ॥ १६ ॥ हंसःसा
रंयथादत्तेसारासारविवेकतः ॥ त्यक्त्वासारंतथासारमंगीकुरुतपंडिताः ॥ १७ ॥ उक्तंमया
नस्वकपोलकल्पितंयथाश्रुतंश्रीगुरुवक्त्रतःपरम् ॥ श्रीगौडपादाद्यविरुद्धमेतद्दूष्यंवचश्चेद्विबु
धैश्चशोध्यम् ॥ १८ ॥ चषकाख्याभिधोग्रंथःसंपूर्णःश्रावणेभवत् ॥ वर्षेमुन्यक्षिनंदेंदौविक्र
मस्यमहौजसः ॥ १९ ॥ इतिश्रीमत्कर्करोपनामकबालकृष्णसुतलक्ष्मीगर्भजरमानाथवि
रचितंकारिकामृतटिप्पणंचषकाख्यंसमाप्तम् ॥ श्रीमदाराध्यदेवतायाश्चरणकमलेर्पितमस्तु॥





इदंकारिकामृतव्याख्यानंचषकाभिधंराजदुर्गपत्तनेकाठियावाडप्रिन्टिंगप्रेसाख्यमुद्रायंत्रेश्री
महिजयशंकराज्ञयापंड्याकाशीरामात्मजाशिवशंकरेणमुद्रितम् ॥ शकाब्दाः१७९९

इतिकारिकामृतव्याख्यानंचंपकाभिधं
समाप्तम्.